# प्रास्ताविकम्

**चराचरजगज्जालसदनं वदनं तव।**
**गलद्गगनगाम्भीर्यं वीक्ष्यास्मि हृतचेतना।।**

अद्भुतरसस्योदाहरणपद्यत्वेन स्वीकृतेऽस्मिन् पद्ये जगदाधारभूतस्य भगवतो वासुदेवस्य वदनमालोकितवत्या यशोदाया उक्तिं हृदयैः श्रावं श्रावं मनसि विस्मयाख्यस्थायिभावः आस्वाद्यते। अत्र जन्यजनकभावसम्बन्धेन यशोदावासुदेवयोः स्थितिः वर्णिता। तत्रापि जनन्याः जन्यस्य वासुदेवस्य आधिक्यं वर्णयता कविना व्यङ्ग्यमुखेन प्रतिपित्स्यते यत् कदाचित सृष्टिकर्त्तुः सकाशात् सृष्टिः अधिकगुणसम्पन्ना भवति। काव्यमार्गेऽपि तथा दृश्यते। कविः यदुदिश्य लिखति पाठकः स्वभावयित्र्या प्रतिभया नैकानि नवीनतत्त्वानि तत्र आविष्करोति, येन कवेः कारयित्र्या कलया समुपस्थापितं वस्तु न्यूनतां भजते। अपि च तेन स्वसृष्ट्या कविः यशस्वी भवति। अतः कवेः सृष्टिः गरीयसीति उच्यते। लोकोक्तिरेकात्र प्रासङ्गिकी स्यात् **"राम से बड़ा राम का नाम"**

अतएव सहृदयाः पाठकाः गवेषणमथतोद्भूनो काव्यमधु शास्त्रमधु वा पायं पायं सुखिनो भवन्तु इति धिया व्यासश्रीपरिवारस्य इयं ज्ञानाम्बुवाहिनी धारा ग्रन्थाकारेण विगतद्वादशवर्षेभ्यः अद्यावधि प्रवाहिता अस्ति। शास्त्राध्वगाः विद्वांसः स्वतृतीयनेत्रोद्भासितं समाजोपकारकं नवीनं रहस्यं स्वस्वनिबन्धे समुपस्थाप्य मन्देतरं नन्दमनुभवन्ति। वयमपि तेषां निबन्धानां प्रकाशनं विधाय मोदामहे।

अद्य व्यासश्रीपत्रिकायाः पञ्चविंशतितमा संख्या प्रकाशिता भवति। अस्मिन् काले समग्रे विश्वे भगवतो रामचन्द्रस्य गुणकीर्त्तनं प्रचलति। अयोध्यायां राममन्दिरस्य प्राणप्रतिष्ठोत्सवः २२-०१-२०२४ तारिकायां भविष्यति। राममन्दिरप्रतिष्ठोत्सवस्तु वाच्यायमानः देवभक्तिं द्योतयति। किन्तु व्यङ्ग्यमुखेन स एव प्रतिष्ठोत्सवः रामायणकालस्य गुणदोषान् आविष्कृत्य

पितृसत्यपालन-कर्त्तव्यनिष्ठा प्रभृतिगुणैः समृद्धं विश्वं निर्मातुं प्रचोदयति। अत एव पत्रिकायाः मुखपृष्ठे श्रीरामजन्मभूमेः श्रीरामविग्रहस्य च चित्रं प्रदत्तम्। सर्वदा स एव कीर्त्तिमान् रामचन्द्रः अस्मान् सन्मार्गे परिचालयतु।

अस्यां संख्यायां २६ शोधनिबन्धाः प्रकाशिताः, यत्र काश्मीरशैवागम-रसास्वाद-मुक्ति-रामायण-वर्णव्यवस्था-लौकिकन्याय-महाभारत–निरुक्त-मुण्डकोपनिषद्रमाकान्तशुक्लकृति-प्रभृतिविषयाः पर्यालोचितास्सन्ति। आदौ अस्माकं समीक्षाकाणाम् आचार्यः किशोरचन्द्रपाढी-आचार्यः सत्यनारायणः-आचार्यः तपशङ्करभट्टाचार्यः- आचार्यः धर्मानन्दराउतप्रमुखानां समीक्षणं जातम्। तैः चिताः निबन्धाः एव प्रकाशनाय सज्जीकृताः।

सज्जीकरणार्थं गवेषकः संस्कृताय दत्तप्राणः श्री विश्वनाथमाहातः महान्तं क्लेशमनुभवति। क्लेशेऽपि तल्लीनतया कार्यं समापयत्। गुरुचरणानां विश्वायन-भारतायनादिकाव्यकर्त्तृणाम् आचार्यः हरेकृष्णशतपथिवर्याणां शुभाशिषा भगवतो श्रीजगन्नाथस्यापारकृपादृशा च सारस्वतं कर्म इदं अविच्छिन्नधारया प्रचलति। अतः सर्वेषां कृते अस्माकं प्रणतिपुष्पाञ्जलिः। अन्तिमे इदमस्तु-

**ज्ञानाम्बुवाहिनी धारा व्यासश्रीरूपिणी सदा।**
**विबुधानां मुदे यायाद् विश्वशिवोर्मिसंयुता।।**

इति

विद्वच्चरणसेवैकमग्नाः

**डॉ. बुद्धेश्वरषडङ्गी**

मुख्यसम्पादकः,

तथा व्यासश्रीपरिवारस्य सदस्याः



Scientific Journal Impact Factor

SJIFactor

# CERTIFICATE OF INDEXING (SJIF 2023)

This certificate is awarded to

**VYASASHRIH**

**(ISSN: 2320-2025)**

The Journal has been positively evaluated in the SJIF Journals Master List evaluation process

SJIF 2023 = 6.812

**SJIF (A division of InnoSpace)**

SJIFactor Project Manager
International Advisory Services
INNOSPACE INTERNATIONAL

SJIFactor Project

# GUIDELINE

1. Paper should be prepared with in10 pages**.**

2. Your paper should be recommended by an eminent scholar (Professor/Associate Professor/PhD Guide) of concern field. Send the pdf and soft copy of your paper with recommendation of the scholar to vyasasri12@gmail. Send a message to the contact no.7003415810 that you have sent the paper.

3. Your paper will be send to our export committee for approval.

***Guide line for the preparation of an article for VYASASHREE, ISSN 2320-2025***

……………………………………………………………………….

**A. PRINTING AREA OF THE PAPER**

Length- **17cm**

Wide-**10.5 cm**

Letter size- **13 for Hindi/Devanagari** (Unicode font)

**11 English (Arial Normal)**

**B. PAPER FORMAT**

1. Title of the Paper (all capital). **Font size-16**

2. Authors' name-**Font size 13**

3. Abstract- Font Size 12

4. Key words (italic). **Font size 12**

5. Introduction**. Font size 12**

6. Main Topic**. Font size 12**

7. Conclusion. **Font size 12**

8. Foot Note. **Font size 09**

9. List of Reference Book s. (Author, Name of the Publisher, Publication year) **Font size 09**

10. Page limit. **6 to 10**

All interested scholars are requested to prepare their research paper as per guide line to avoid the printing hazard.

**The paper not followed the above guide line may be rejected at final stage**.

N. B. The submitted papers are reviewed by the Board of Referees and Editorial Board. Only the selected papers are published in the journal. So, it takes three to six months to publish a paper.

**Dr. Buddheswar Sarangi**

***Chief Editor, Vyasashree***

# सूचीपत्रम्

# महिमभटोक्ता परा वाक्- एका समीक्षा

**डॉ. बुद्धेश्वरषडङ्गी**
सहाचार्यः साहित्यविभागमुख्यश्च,
श्रीसीतारामवैदिकादर्शसंस्कृतमहाविद्यालयः,
कोलकाता

**उपक्रमः**

न हि विदुषां मतिचुम्बिनीति न यत् काश्मीरविदुषां जन्मनः काचित् श्रद्धा शैवागमे, निहिता आसीत्। शैवागममार्गाश्रयिणी तेषां वाणी भगवतः शिवस्य आल्हादिनी शक्तिः, सैव जगद्विवर्त्तकारिणीति ते मुक्तकण्ठं स्वीकुर्वन्ति। महाकविकालिदासात् प्रारभ्य मम्मटभट्टं यावत् सर्वेषां काव्यमार्गे शिवशक्त्योः अलौकिकी लीला प्रस्फुरति। भगवतः परमशिवस्य रूपद्वयं तैः स्वीक्रियते। यथा- मन्त्ररूपं प्रपञ्चरूपञ्च। संसारप्रपञ्चस्य, मन्त्राख्याक्षरप्रपञ्चस्य च अभिव्यक्तिः पराशक्तेः सकाशात् भवति। सेयं पराशक्तिः परमशिवस्य एकं रूपमस्ति। यथा- वेदान्तादिशास्त्राधारेण विवर्त्तरूपं जगत्प्रपञ्चं निर्मातुमिच्छता परंब्रह्मणा परमपुरुषस्य सृष्टिः क्रियते। ततः एव परमपुरुषात् जगतः उत्पत्तिर्भवति तथैव शैवागमेऽपि जगत्कारणभूता पराशक्तिः अक्षरपरमशिवस्य काऽपि निर्मितिः, सा जगत् निर्माति पालयति विनाशयति च। अन्तिमे सा विकृतिरूपं परित्यज्य पुनः परमशिवे निर्लीयते। अस्याः पराशक्तेः कश्चन विमर्शः काश्मीरशैवागमदिशा अत्र करिष्यते।

**वीजशब्दाः** - शैवागमः, परा, पश्यन्ती, मध्यमा, वैखरी, परमशिवः, विवर्त्तः।

**मूलविषयः -**

जगतः कारणस्य कारणं सूक्ष्मातिसूक्ष्मरूपेण सर्वत्र विराजते, काश्मीरशैवागमदृष्ट्या स्थावरजङ्गमात्मकं जगत् परावाचः सकाशात् जायते। परमशिवस्तु स्थिरः अचलो वा शक्तिस्तु परारूपिणी जगत्प्रपञ्चस्य निर्मात्री। स्वयमेव शिवरूपा। इयं द्विविधा अक्षररूपिणी प्रपञ्चरूपिणी च। अक्षररूपिणी सा मन्त्रात्मिकेति उच्यते। सा वाचः मूलभूता भवति। सा च शरीरिणां मूलाधारचक्रे सुप्तावस्थायां सर्वदा तिष्ठति। यदा वक्ता

किमपि वक्तुमभिलषति तदा जागरिता सती अव्यक्तरूपेणैव नाभिचक्रं प्रति प्रयाति। तत्रैव मूलरूपिणीं परां तथा उर्ध्वस्थां मध्यमां पश्यन्ती पश्यन्ती वाक्। अतः तस्याः नाम पश्यन्ती[2]। यदा नाभिचक्रात् उर्ध्वं प्रयाति तदा अक्षररूपं धृत्वा स्वयमेव हृदयप्रदेशे तिष्ठति[3]। ततः कण्ठताल्यादिस्पर्शेण व्यक्तरूपा विवक्षुः अर्थराशिं प्रकाशयति[4]। महान् वैयाकरणः भर्तृहरिः तदीये वाक्यप्रदीये परावाचः विवर्त्तनमेव शब्दानामुत्पत्तौ कारणमिति प्रकाशयति-

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यथा[5]।।**

व्यक्तिविवेककारोऽपि स्वग्रन्थारम्भे मङ्गलवाक्ये जगत्प्रपञ्चकारणभूतां परां वाचं स्तौति यथा-

**अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम्।**
**व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम्[6]।।**

अस्याः कारिकायाः सारार्थो यथा- विद्वान् महिमभट्टः सर्वातिशायिनीं वाचो मूलस्वरूपां परां परामृश्य दूरूहं ध्वनितत्त्वम् अनुमाने अन्तर्भावयितुं प्रयासं करोति। अत्र व्यङ्ग्यार्थो भवति वाचः सर्वे विवर्त्ताः परायाः जायन्ते। अतः तस्याः प्रसादात् विद्वान् अक्षरमन्त्रमार्गे सर्वं साधयितुं क्षमो भवति। आनन्दवर्धनस्य ध्वनिवादः काव्यमार्गे परमो मार्गः। तस्यापि खण्डनं परावाचः प्रसादात् कर्त्तुं शक्यते।

अलङ्कारसर्वस्वकारोऽपि त्रिविधविग्रहरूपां वाचं ग्रन्थादौ स्मरति। स तु अव्यक्तरूपां अतिन्द्रियग्राह्यां परां शक्तिं न गणयति। यतः पश्यन्त्याः एव शब्दरूपस्याः वाचः अनुभवो भवति ततः वाचः विवृतिरूपं स्मरति। अतः त्रिविग्रहरूपा वाणी इति कथनेन पश्यन्ती मध्यमा वैखरी इमाः तिस्रः वागवस्थाः स्वीक्रियन्ते।

**विषयविमर्शः -**

वाचः इमाः चतस्र अवस्थाः प्रपञ्चजगतः ईश्वर-प्राज्ञ-हिरण्यगर्भ-विराटपुरुषाकारत्वेन कल्पयितुं शक्यते। काशीपरम्परायाः महान्तः विद्वांसः काश्मीरशैवागमस्य तलस्पर्शिपण्डिताः राजेश्वरशास्त्री द्रविड महोदयाः पूर्वोक्तक्रमेण परा-

ईश्वरस्थानीया, पश्यन्ती प्राज्ञस्थानीया, मध्यमा हिरण्यगर्भस्थानीया, वैखरी विराट् स्थानीयेति विचारयन्ति। तथैव परा-साक्षीरूपिणी, पश्यन्ती-निर्विकल्पकज्ञानविषयीभूतशब्दस्वरूपिणी, मध्यमा-सविकल्पकज्ञानविषयीभूतशब्दरूपिणी, वैखरी- अर्थक्रियाकारिणी शब्दस्वरूपिणी च प्रोच्यन्ते। अवस्थाभेदेनापि इमाः चतस्रषु अवस्थासु तिष्ठन्ति यथा परा- तुरीयावस्था, पश्यन्ती- सुषुप्तिः, मध्यमा- स्वप्नावस्था, वैखरी- जाग्रदवस्था।

डा. वासुदेवशरणजी अग्रवाल् महोदयस्तु पञ्चकोशेषु परावाचः स्थितिं निरूपयति यथा परा-आनन्दमयकोशे, पश्यन्ती-विज्ञानमयकोश, मध्यमा-मनोमयकोशे, वैखरी-प्राणमयकोशे विराजन्ते।

अतएव काश्मीरशैवागमानुसारेण शिवशक्त्योः सकाशात् प्रादुर्भूतं जगत् मन्त्ररूपं भूत्वा सम्पूर्णं प्रपञ्चमालोकयति। प्रपञ्चरूपं तु स्थूलजगत् स्थूलरूपं, अक्षररूपं तु सूक्ष्मरूपं भवति। मल्लिनाथादयस्तु शिवस्य रूपं व्यञ्जनवर्णात्मकमिति शक्तेः रूपं स्वरवर्णात्मकमिति चिन्तयन्ति। सर्वं शिवमयं जगत्। तत्प्रसादेन मानवः मोक्षपदवीं प्राप्य शिवानन्दमनुभवति। सम्पूर्णं साहित्यजगत् शिवरूपमिति वदता आह-

**निदानं जगतां वन्दे वस्तुनी वाच्यवाचके।**
**ययोः साहित्यवैचित्र्यात् सतां रसविभूतयः**[7]**।।**

**उपसंहारः -**

परा वाक् ब्रह्मरूपिणी। शब्दार्थसाधकः तस्याः उपासना करणीया। यदा तस्याः जागरणं भवति तदा सूक्ष्मातिसूक्ष्मशब्दतत्त्वमनुभवविषयीभूतं भवति। या वैखरी अस्माभिः श्रूयते सा परा वाचः विवर्त्तरूपमेव इत्यलं पल्लवितेन।

## पादटीका-

1. "येयं विमर्शरूपैव परमार्थचमकृतिः
सैव सारं पदार्थानां परा वागभिधीयते"।।-जयरथकृता विमर्शिनी
2 "अविभागा तु पश्यन्ती सर्वत्रः संहृतक्रमा
स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी"।।- जयरथकृता विमर्शिनी
3. अन्तःसङ्कल्परूपा या क्रमरूपानुपातिनी
प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्त्तते।। तत्रैव
4. स्थानेषु विवृत्ते वायौ कृतवर्णपरिग्रहा।
वैखरी वाक् प्रभोक्तृणां प्राणवृत्तिनिबन्धना।। तत्रैव
5. वाक्यप्रदीये ब्रह्मकाण्डे-1
6. व्यक्तिविवेके मङ्गलाचरणम्-1/1
7. व्यक्तिविवेकेस्य हिन्दीव्याख्या पृ.-4

## सहायकग्रन्थाः

1. रेवाप्रसाद्विवेदिसम्पादितः व्यक्तिविवेकः, काशी-संस्कृत-सीरिज-१२, बनारसनगरम्।
2. सूर्यमणिरथसम्पादितः व्यक्तिविवेकः।
3. कविराजविश्वनाथः प्रणीतः साहित्यदर्पणः, चौखम्वा-विद्याभवनम्, वाराणसी, १९५७ ।
4. रुय्यतकृतम् अलंकारसर्वस्वम्, डॉ. रामचन्द्रः द्विवेदी, मतीलाल-वनारसीदासः, दिल्ली।
5. मल्लिनाथटीकोपेतं रघुवंशमहाकाव्यम्, चौखम्वा-संस्कृत-सीरिज-आफिसः, बनारस-१।
6. श्रीमदानन्दवर्धनाचार्यविरचितः ध्वन्यालोकः, आचार्यः डॉ. सुरेन्द्रदेव-स्नातकः, शास्त्री, चौखम्भा-पब्लिशर्स, वाराणसी, २००६।

# विधुभूषण भट्टाचार्यस्य ब्रह्मविषये विविधविमर्शनां सन्दर्भे ब्रह्मस्वरूपचर्चा

**तापस वर्मनः**
शोधच्छात्रः, यादवपुरविश्वविद्यालयः

**शोधसारः-**

जीवनस्य किं प्रयोजनं किं च जीवनस्य अर्थः बहुभिः मुनिरैभिः उक्तम्। परन्तु ते अनेकेषु विस्तृतेषु सुविचारितेषु खण्डेषु विभक्ताः सन्ति। यदि भवन्तः चिन्तयन्ति तर्हि जीवनस्य परमं लक्ष्यं सुखम् इति सुलभतया अवगन्तुं शक्यते। वयं सर्वदा सुखं कामयामः न च कदापि दुःखम्। जीवनानुकूलं सुखं जीवनप्रतिकूलं च दुःखम्। कः एषः मोक्षमार्गः? नानाश्रुतिषु उपनिषत्सु च ब्रह्मैव मुक्तिमार्गः। अस्य ब्रह्मस्वरूपस्य चर्चां कुर्वन् ब्रह्मणः स्वरूपम् तथा तटस्थलक्ष्मणरूपेण द्वौ भागौ प्राप्यते। तत्त्वस्य रूपं प्रकाशयति यद् स्वरूपम् तद् स्वरूपलक्षणम् इत्युच्यते। अपरं तु तत्त्वस्य प्रतीयमानरूपं प्रकाशयति यद् स्वरूपम् तद् तटस्थलक्षणम् इत्युच्यते। यथा- यदा कश्चित् नृपत्वेन कार्यं करोति तदा तस्य वास्तविकतादात्म्यं तस्य रूपस्य स्वरूपं भवति। किन्तु अभिनये नृपस्य तादात्म्यं तस्य रूपस्य तटस्थ एव। तस्मात् ब्रह्मणि सति जगत् कारणं भवति तटस्थलक्षणम्। ब्रह्मणि यत् स्वरूपं दृश्यते, न तु सर्वदा ब्रह्मणि, तत् ब्रह्मणः तटस्थलक्षणम्। जगत् न ब्रह्मणो विषयः सत्यं सत्यम् एकविधम् अन्यत् चेत् अनृतम् उच्यते अन्यथा भासते चेत् विवर्त इति। ब्रह्मणः स्वरूपलक्षणम् - सच्चिदानन्दस्वरूपो अर्थात् ब्रह्म सत्स्वरूपम्, चित्स्वरूपम् आनन्दस्वरूपम् चेति सन्दर्भे उक्तम्। सत्शब्दस्य अस्तित्वं, चित्शब्दस्य चैतन्यं ज्ञानं वा, आनन्दशब्दस्य अर्थः ब्रह्मसंयोगजन्य दिव्यानन्दस्य भावः। प्रामाणिक्यं सुखानन्दं च ब्रह्मणः गुणाः न सन्ति। सत्-चित-आनन्द-सह ब्रह्मणः विशेष्य-विशेषण-सम्बन्धः नास्ति इति यावत्। एते ब्रह्मणः स्वरूपलक्षणाः अर्थात् तेषां माध्यमेन ब्रह्मस्वरूपं साक्षात्करणीयम्। एतैः पदत्रयैः ब्रह्मणः कदापि लक्षणं न भवति। ब्रह्म सत्स्वरूपम् अस्तित्ववरूपं वा - अस्य अर्थः अस्ति यद् ब्रह्म असत्यं नास्ति। ब्रह्म कदापि अभावपदार्थः न भवितुमर्हति। यतः अभावात् कदापि भावः न भवितुम् अर्हति। तेन ब्रह्मणो सत्त्वनिराकरणं न सम्भवति। ब्रह्म चितं चैतन्यस्वरूपम् वा अस्य अर्थः अस्ति यत् ब्रह्म अचित् अर्थात् असंज्ञानात्मकम्। ब्रह्म चैतन्यं ज्ञानं च

प्रकटीकरणम्। सः आत्मानं प्रकाशयति। एवं ब्रह्म चैतन्यं वा सर्वदा प्रकटितम्। ब्रह्मस्वरूपं किम् अस्मिन् शोधपत्रे प्रकाशते।

**शब्दकुञ्जिकाः-** स्वरूपम्,आत्मा, ब्रह्म, शब्दः, उपनिषद्

शाश्वतकर्मकामात् देहात्मनः मनःहीनत्वाद् जीवः जन्ममरणप्रवाहे पुनः पुनः परिभ्रमति। तस्य जगतः समुद्रात् तारयितुं दयालुः श्रुतिउपनिषद् आत्मतत्त्वस्य उपदेशं दत्तवान्। जीवस्य मोक्षस्य एकमात्रं मार्गं आत्मानं ज्ञातव्यम्। अत एव उच्यते– आत्मानं वृद्धिः आत्मतत्वस्य प्रचारः विविधोपनिषदेषु गीतासु च भवति। आत्मा ब्रह्म च पर्यायवाची। अत् धातौ मनःप्रत्यययोगेन आत्मशब्दो निष्पन्नः। अत् धातोः गतिः सर्वगतिः वा इत्यर्थः। तस्माद् सर्वगतो वा सर्वव्यापी वा आत्मा। आचार्यशङ्करेणापि कृते वेदान्तदर्शनभाष्ये ब्रह्मशब्दार्थं वदितुं काले उक्तम्– 'ब्रह्मशव्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयः अर्थाः प्रतीयन्ते वृहतेर्धातेरर्थानुगमात् बृह् धातौ मनिन् प्रत्ययेण ब्रह्मशब्दः सिद्ध्यति इत्यर्थः'।[1] आचार्येण विधुभूषण-भट्टाचार्येण उक्तम् - यद् महत्तमम्, अतः ब्रह्म - अयं ब्रह्मशब्दार्थः। देशेन कालेन वा अतितः, अतः शाश्वतः। कालातिरिक्तं नित्यं ध्रुवं महत्तमं निर्दोषं शुद्धं वा। ब्रह्म शुद्धम्, अविद्यादिदोषशून्यम् इत्यर्थः, अत एव स्वप्रतिपादितम्।[2] अतः आचार्य भर्त्तृहरि ब्रह्मस्वरूपशब्दं आह्वयति तदा शब्दे नित्यत्वमित्यर्थः इति गम्यते।

आचार्येण भर्त्तृहरिणा उक्तम् –

**अनादिनिधनं व्रह्म शव्दतत्त्वं यदक्षरम्।**
**वगवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।**[3]

अतः शब्दः ब्रह्म अस्ति। शब्दस्योत्पत्तिविनाशनाभावात्। इदं नामविशिष्टं विचित्रं विश्वं केवलं शब्दस्यैव अज्ञेयस्थितिः अर्थात् शब्दत्वेन ब्रह्मणः। आचार्येण भर्त्तृहरिणा उक्तमेतत् उदाहरणं शब्दानां स्थायित्वं प्रतिपादयति न संशयः। आचार्येण विधुभूषण-भट्टाचार्येण उक्तम् - यत् वयं सामान्यतः शब्दं वदामः, तत् नित्यं न दृश्यते। यतः वक्तुः स्वर-तालु-आदि-प्रभावात् यः शब्दः उच्चारितः भवति, अस्माकं कर्णयोः प्रविशति च, सः शब्दः इति वदामः । इदं रूपं शब्दोच्चारणापूर्वं न अनुभूयते, उक्त्यानन्तरम् अपि न तिष्ठति। अतः उत्पत्तिविनाशकः तादृशः शब्दः शाश्वतः न भवितुम् अर्हति।[4] विशेषतः भर्तृहरिणा

शब्दः ब्रह्म उच्यते। सर्वव्यापकं वृहत्तमं वा यत्किमपि देशस्य कालस्य वा सीमायां न निरुद्धं तत् उपनिषदेषु ब्रह्म उच्यते। छान्दोग्योपनिषदि वर्णितम् - भूमा इति अवस्था यस्मिन् अन्यत् न पश्यति, अन्यत् किमपि न श्रृणोति, अन्यत् किमपि न जानाति।[5] आचार्येण विधुभूषण-भट्टाचार्येण उक्तम् - यद् मनसा लीनं भवति तत् जगत् मनसा परं शुद्धं ब्रह्म सत्ता। अतः यावद् मनसादवस्थायां जीवति तावत् ब्रह्मसत्तां विविधं विखण्डितं च अनुभवितुं शक्यते। अयं आत्मनः ब्रह्म इति कथ्यते।[6]

महर्षिः याज्ञवल्क्यः अपि बृहदारण्यकोपनिषदस्य चतुर्थे अध्याये चतुर्थे ब्राह्मणे आत्मतत्वस्य उपदेशं दत्तवान्। आत्मा वा ब्रह्म वा एकमेव अद्वितीयम्। स नित्यः शुद्धः बुद्धः मुक्तः अजरः अमरः अमरः निर्गुणः निर्गुणः च। न लयस्तस्य, अविनाशी, आत्मनः रूपमिदं निरुपाधिकरूप उच्यते। अयं आत्मा यदा पुनः शरीरचित्तादिभिः सह सम्बद्धः भवति तदा सोपादिक् आत्मा इति उच्यते । प्रत्येकं उपनिषदं भिन्नरूपेण एतयोः रूपयोः कथयति। बृहदारण्यकोपनिषदे ब्रह्मणः रूपद्वयं उल्लेखितम् अस्ति। एकः सगुणः अपरः निर्गुणः।

सर्वादौ उच्यते - स वा अयं आत्मा ब्रह्म।[7] अर्थात् आत्मा वस्तुतः ब्रह्म एव। भिन्न-भिन्न-उपाधि-संबद्धः आत्मा च भिन्न-भिन्न-रूपेषु दृश्यते। प्रथमं आत्मनः सोपाधिकरूपाः उल्लिखिताः –

स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमय प्राणमयश्चक्षुमयः श्रोत्रमयः पृथिवीमय आपमयो वायुमय आकोशमयस्तेजमयः अतेजमयः काममयोऽकामयः क्रोधमयोऽक्रोधमयो धर्ममयोऽधर्ममयः सर्ममयस्तद् यदेतद् इयंमयः अदोमय इति यधाकारी यधाचारी तथाभवति साधुकारी साधुभवति पापकारी पापभवति पुण्यः पुण्येन कर्मणा भवति पाप पापेन।[8]

अर्थात् आत्मा वैज्ञानमय, विज्ञानस्य वुद्ध्याः वा धर्मः आत्मनि आरोपगतः आत्मा वैज्ञानिकः इव भासते। तादृशैः मनरूपसंज्ञाभिः सह संबद्धे आत्मा मनोमयः भासते । एवं पञ्चप्राणसंबद्धे प्राणामयत्वेन चक्षुःसंबद्धे चक्षुषीरूपं दृश्यते । एवं पार्थिवद्रव्योत्पत्तौ आत्मा पृधिवीमयः भासते, जलसृष्टौ, आत्मा अपोमयः वायुसृष्टौ आत्मा वायुमयः आकाशसृष्टौ काले आकाशमयः देवानुकूलस्य तैजसशरीरस्य उत्पत्तिस्थाने आत्मा तेजमयः, पशुशरीरस्य निर्माणकाले नरकादिलेकस्य च निर्माणकाले आत्मा अतेजमयः इतग प्रतिभासते। आत्मा

कर्मणानुसारेण फलं भुङ्क्ते। अतएकोऽत्मा नामानुसारेण भिन्नो इति भासते । फलतः एकस्य रूपस्य अन्यस्य रूपस्य च भेदः कल्प्यते। इश्दोपनिषदे आत्मानः एतान् सोपाधिरूपान् वदति

**अनेजदेकं मलसो जवीयो**
**नैनद्देवा आप्नुवन् पूर्वमर्षत्।**
**तद्धावतोऽन्यानत्येति तिष्ठत्**
**तस्मिन्नपो मातरिश्वा दधाति।।**[9]

याज्ञवल्क्येन आत्मानः निरुपाधिकस्वरूप-सम्वन्धे उक्तम् –

**स वा एष महानज आत्माऽजरोऽमरोऽभयः।**
**ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेद।।**[10]

आत्मा ब्रह्म वा महान् सर्ववृहत्। अज वा जन्महीनः। अमरः मृत्यरहितः वा। सत्ता-बुद्धि-विपरिणामात्मनः भावविकारत्रयेण निषिद्धम्। आत्मा ब्रह्म वा नित्यं शाश्वतं च तस्य न कोऽपि विकारः। ईशदोपनिषदि आत्मायाः निर्गुणस्वरूपसम्वन्धे उच्यते-

**स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापवगद्धम्।**
**कविर्मनीषी परिभूः स्वयम्भूः...........।।**[11]

गीतायाम् उक्तम् –

**न जायते म्रियते वा कदाचिद्**
**नायं भूत्वा भविता वा न भूयः।**
**अजो नित्यः शाश्वतोऽयं पुरानो**
**न हन्यते हन्यमाना शरीरे।।**[12]

स्वगुणनिर्गुणव्रह्मविषये आचार्येण विदुभूषण-भट्टाचार्येण उक्तम् - ब्रह्म विश्वं च केवलं मानसिकावस्थाभेदात् भिन्नभावनानां अधीनाः भवन्ति।[13]

आत्मनः ब्रह्मस्य वा सोपाधिकनिरुप्पाधिकरूपेषु निरुप्पाधिकरूपं मूलम् । यावद् मनुष्येषु अचेतना वर्तते तावत् अस्माकं शरीरं बुद्धि इत्यादि मन्यते। यदा वास्तविकज्ञानस्य

प्रभातेन अज्ञानं निवृत्तं भवति तदा आत्मा वा ब्रह्म वा एकं अद्वितीयं च द्रक्ष्यति। न कश्चित् रूपगुणेन लक्षणीयः। अत एव उपनिषदेषु उक्तम् एवं निर्गुणं ब्रह्म आत्मतत्त्वं वा निषेधमपेक्ष्य अभिप्रेतम्। तादृशं ब्रह्म सम्प्राप्य ब्रह्म भवति - ब्रह्मवेद ब्रह्मैव भवति।

## तथ्यसूत्राणि

1. वेदान्दर्शनम् (शङ्करभाष्यम्) - 1.1.1
2. भट्टाचार्य, विदुभूषण, आचार्य्य भत्तृहरिर शव्दतत्त्व, विश्ववाणी, चत्वारिंशत् वर्षम्, पत्राङ्कः – 411
3. भत्तृहरि, वाक्यपदीयम् - 1.1
4. भट्टाचार्य, विदुभूषण, प्रागुक्तम्
5. छान्दोग्योपनिषद् – 7.14.1
6. अभेदानन्देर अद्वैतवाद, विश्ववाणी, अष्टद्वाविंशतितमम् वर्षम्, पत्राङ्कः – 490
7. वृहदारण्यकोपनिषद् - 4.4.5
8. तदेव
9. ईशदोपनिषद्, मन्त्रः -4
10. वृहदारण्यकोपनिषद् - 4.4.25
11. ईशावास्योपनिषद्, मन्त्रः – 8
12. श्रीमद्भगवद्गीता - 2.20
13. अभेदानन्देर अद्वैतवाद, विश्ववाणी, अष्टद्वाविंशतितमम् वर्षम्, पत्राङ्कः – 490
14. मुण्डकोपनिषद् - 3.2.9

## सहायक-ग्रन्थाः

1. ईशोपनिषद्, स्वामी जुष्टानन्दः (अनुवादकः), कलकाताः उद्बोधन कार्यालयः, 1992।

2. उपनिषद् ग्रन्थावली, स्वामी गम्भीरानन्द (सम्पादकः), कलकाताः उद्बोधन कार्जालयः, 19971

3. बृहदायण्यकोपपनिषद्, करुणासिन्धु दासश्च वेचाराम घोषश्च सुवुद्धिचरण गोस्वामी च(सम्पादकाः), कलकाताः संस्कृत वुक डिपो, 2001।

4. बेदान्तदर्शनम्, स्वामी विश्वरूपानन्दः (अनुवादकव्याख्याकारौ), कलकाता, उद्बोधन कार्यालयः, 1980।

5. भत्तृहरिः, वाक्यपदीयम्, मृणालकान्ति गङ्गोपाध्यायः (सम्पादकः), कलकाता, संस्कृत बुक डिपो, 2018 ।

6. मुण्डकोपनिषद्, स्वामी जुष्टानन्दः (अनुवादकः), कलकाताः उद्बोधन कार्यालयः, 1999।

7. श्रीमद्भगवद्गीता, स्वामी वासुदेवानन्द (व्याखाकारानुवादकौ च), कलकाता, उद्बोधन कार्यालय, 2000।

**पत्रिका -**

1. विश्ववाणी, स्वामी अभेदानन्दः (सम्पादकः), कलकाता, वेदान्त आश्रमः, 1965 (28 बर्षः)।
2. तदेव, 1978 (40 बर्षः)।

# अभिज्ञानशकुन्तलमिति नाटके महाकविकालिदासस्य नीतिबोधविमर्शः

**डॉ. प्रसेनजित्-नियोगी**
सहकार्य्यध्यापकः, संस्कृतविभागः,
अघोरकामिनीप्रकाशचन्द्रमहाविद्यालयः, वेङ्गाइ,
हुगली

**प्रबन्धसारः(Abstract)**

महाकविकालिदासस्य रचनासु अभिज्ञानशकुन्तलमिति नाटकमन्यतमम्। तत्र महाकविकालिदासस्य नीतिबोधविषये बहवः दृष्टान्ताः वर्तन्ते। प्रथमतः, वैखानसमुनिद्वारा दुष्यन्तस्य मृगहननिवारणवृत्तान्तेन प्राणिहत्यानिवारणविषये तथा धनुर्धारिणः राज्ञः प्रकृतकर्तव्यविषये कालिदासस्य यो नीतिबोधः प्रकाशितः सः अनवद्यः। किञ्च राजा मृगयाव्यसनीभूतो न भवेत् इत्यपि अत्र कविना परोक्षतया प्रकाशितः। द्वितीयतः, शकुन्तला राज्ञा परिणेया न वेति दुष्यन्तचित्ते य आर्यविषयकविचारो महाकविना नाटके संयोजितः तेन तदीयनीतिबोधः प्रकाशितः। तृतीयतः, कण्वाश्रमे दुष्यन्त-शकुन्तलयोः प्रथमप्रणयः आसीत् कामजः, देहजः, गुरुभिः अननुमतः कर्मविघातकश्च। अतः दुर्वासामुनेः शापेन स प्रणयः विध्वस्तः। किन्तु मारीचाश्रमे संघटितं तयोर्मिलनमासीत् कामगन्धविरहितं, शरीरसम्पर्करहितं, विशुद्धं, तपोपूतं, स्वर्गीयं, शाश्वतञ्च। अत्र पार्थिवप्रेम्नः स्वर्गीयप्रेम्नि उत्तरणं कृत्वा कालिदासेन स्वकीयनीतिबोधः प्रकाशितः। चतुर्थतः, प्रकृतिप्रेमिकेन महाकविना विविधदृष्टान्तोपस्थापनेन प्रकृतिं प्रति तथा पशुपक्षिणः प्रति कीदृशी प्रीतिः अस्माभिः करणीया अस्मिन् नाटके तदुपदिश्य निजप्रकृतिप्रेमिकत्वं नीतिबोधकत्वञ्च प्रकाशितम्। पञ्चमतः, पतिगृहे पालनीयतया यः कर्तव्योपदेशः महर्षिकण्वमुखेन महाकविकालिदासेन शकुन्तलाम् उद्दिश्य प्रदत्तः स हि सर्वेषु कालेषु एव कुलवधूनाम् आदर्शभूतः। षष्ठतः, षष्ठाङ्के धीवरवृत्तान्तोपस्थापनेनापि महाकविना तदीयः नीतिबोधः प्रकाशितः। तत्र जातिविद्वेषं अस्माकं समाजात् समूलम् उत्पाटयितुं धीवरमुखेन 'सहजं किल यद्विनिन्दितमि'त्यादिकी कालिदासस्य उक्तिः समादरणीया। सप्तमतः, कामलोलुपः,

कपटः राजा दुष्यन्तः महाकवेः कालिदासस्य वर्णनचातुर्येण आदर्शनृपतिरूपेण आदर्शपतिरूपेण च वर्णितः। अतः अत्रापि आदर्शनृपतेः चरित्रवर्णनावसरे महाकवेः नीतिबोधः लक्षणीयः। एतद्व्यतिरिच्यापि महाकविकालिदासेन बहुत्र नाटके विविधदृष्टान्तमाध्यमेन स्वीयनीतिबोधः प्रकाशितः।

**कुञ्चीशब्दाः(Keywords)–** कालिदासः, अभिज्ञानशकुन्तलम्, नीतिबोधः, प्राणिहत्यानिवारणम्, व्यसनम्, नीरक्षीरविवेकी, स्वर्गीयप्रेम, प्रकृतिप्रेम, जातिविद्वेषम्, आदर्शनृपतिः।

## भूमिका(Introduction)

संस्कृतसाहित्यगगने उज्ज्वलज्योतिष्करूपः कविरविः महाकविः कालिदासः भास्वरतया विराजतेतराम्। तत्र कालिदासविषये -

"**पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासः।**

**अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव।।**" - इति यद्वचनं वर्तते तेन महाकवेः कालिदासस्य या अनन्यता कविकुलललामता च उद्घोषिता तत्र प्रमाणं हि कालिदासस्य कृतिषु अनवद्या हि अभिज्ञानशकुन्तलमिति नाटकरचना। वस्तुतस्तु कालिदासस्य कृतिश्रैष्ठविमर्षणे एतन्नाटकमेव निकषभूतम्। अतएव उच्यते– "कालिदासस्य सर्वस्वमभिज्ञानशकुन्तलमिति।" अस्मिन् नाटके महाकविकालिदासस्य नीतिबोधविषये बहवः दृष्टान्ताः वर्तन्ते। तत्र महासागरात् एकघटपरिमितजलग्रहणवत् तेषु कांश्चित् दृष्टान्तान् अधः उपस्थाप्यन्ते।

नाटकस्य आदावेव अस्माभिर्दृश्यते यत् कश्चित् मृगमनुसरन् सशरचापहस्तः राजा दुष्यन्तः नाट्यमञ्चे प्रविष्टः। तत्र यदैव तं मृगं हन्तुं राजा शरसन्धानं करोति, तदैव आश्रमस्थवैखानसमुनिना –

**"न खलु न खलु वाणः सन्निपात्योऽयमस्मिन् मृदुनि मृगशरीरे तूलाराशाविवाग्निः।**
**क्व वत हरिणकाणां जीवितञ्चातिलोलं क्व च निशितनिपाताः वज्रसाराः शरास्ते।।"**

इति, तथा –

**"तत् साधु कृतसन्धानं प्रतिसंहर सायकम्।**
**आर्तत्राणाय वः शस्त्रं न प्रहर्त्तुमनागसि।।"[१]**

इति वाक्येन स राजा प्राणिहननरूपात् अपकर्मणः निवारितः। वस्तुतस्तु प्राणिहत्या हि नीतिविरुद्धकर्म। विशेषतः ये तु राजानः तेषां बाहुवलं वाणाद्यस्त्रं च विपन्नानां रक्षणार्थं पालनार्थं च प्रवर्तते, न तु निरपराधानां पीडनाय। अस्त्रवलं मूर्खस्यैव वीरवत्त्वप्रदर्शनमात्रं, न तु ज्ञानशीलस्य। अत्र प्राणिहत्यानिवारणविषये तथा धनुर्धारिणः राज्ञः प्रकृतकर्तव्यविषये कालिदासस्य यो नीतिबोधः प्रकाशितः सः अनवद्यः। किञ्च राजा मृगयाव्यसनीभूतो न भवेत् इत्यपि अत्र कविना परोक्षतया प्रकाशितः। आचार्यमनुना मनुसंहितायां मृगया दशविधकामजव्यसनान्यतमतया उल्लिखिता, या हि राजभिः परित्यज्या। तथाहि मनुसंहितायां उक्तम् -

**"दश कामसमुत्थानि तथाष्टौ क्रोधजानि च।**
**व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत्।।"[२]** इति।

तत्र दश कामजव्यसनानि हि –

**"मृगयाक्षो दिवास्वप्नः परिवादः स्त्रियो मदः।**
**तौर्यत्रिकं वृथाट्या च कामजो दशको गणः।।"[३]** इति।

व्यसनासक्तराज्ञः परिणतिविषये उच्यते –

**"कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः।**
**वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु।।"[४]** इति।

**द्वितीयतः**, कण्वतपोवनदर्शननिमित्तं समागतो राजा दुष्यन्तः शकुन्तलाया अपरूपं रूपं प्रेक्ष्य तां प्रति समासक्तो जातः। पत्नीत्वेन तामाप्तुं तस्य अन्तःकरणम् उद्वेलं सञ्जातम्। ततः

जलसेचनरतां शकुन्तलाम् अवेक्षमाणस्य सखिभ्याम् अनसूयाप्रियंवदाभ्यां शकुन्तलाया आलापं श्रृण्वतः दुष्यन्तस्य मनसि अयं संशयः समुदितः– "अपि नाम कुलपतेरियमसवर्णक्षेत्रसम्भवा स्यात्?" इति। किन्तु परक्षणमेव आत्मप्रवृत्तिप्रमाणमाश्रित्य क्षत्रपरिणेया एव शकुन्तला इति विविच्य तेन स्वगतोक्तिः विहिता –

"**असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः।**

**सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः।।**"[५] इति।

दुष्यन्तचित्ते सहसेयं युक्तिः समुदिता यत् स हि आर्यः, स कदापि अनुचितं कर्म स्वप्नावस्थायां मत्ततया वापि कर्तुं न पारयति। आर्यलक्षणमुक्तं शास्त्रे –

"**कर्तव्यमाचरन् कार्यमकर्तव्यमनाचरन्।**

**तिष्ठति प्रकृताचारे यः स आर्य इति स्मृतः।।**" इति। (वसिष्ठस्मृतिः)

आर्याणां चित्तं यतः सत्कार्येषु अभ्यस्तं अतः स्वत एव सत्कार्याभिमुखं प्रवर्तते। अज्ञानदशायामपि नास्ति तेषां भ्रमसम्भावना। आचार्यमनुनापि उच्यते –

"**वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।**

**आचारश्चैव साधूनामात्मनस्तुष्टिरेव च।।**"[६] इति।

दुष्यन्तोऽपि यतः आर्यः सज्जनो वा तथा तस्य चित्तं यस्मात् शकुन्तलायां समासन्नं प्रवृत्तं च तस्मात् अवश्यमेव सा दुष्यन्तेन परिणेया। अतएव सज्जनस्य हृदयप्रवणता एव सन्मार्गोन्मार्गसमूहानां मानदण्डस्वरूपा। सन्दिग्धेषु विषयेषु सन्तो न गच्छन्ति। साधूनां चेतो यत्र धावति तदेव कार्यमिति। तेन यः नीरक्षीरविवेकी भवितुमिच्छति सोऽवश्यमेव सज्जनः स्यात् इति अत्रापि महाकवेः नीतिबोधः प्रकाशितः।

**तृतीयतः**, दुष्यन्त-शकुन्तलयोः प्रथमः प्रणय आसीत् कामजः देहजश्च। अन्योऽन्यं क्षणाय चक्षुषा विलोक्य मिथः हृदयमज्ञात्वा शारीरं लावण्यमात्रं निरीक्ष्य एव तयोरिदं मिलनम्। किन्तु यत् मिलनं शारीरं रूपजं वा भवति तन्मिलनं क्षणस्थायि। तस्मिन् मिलने शारीरोपभोगवासना चरितार्थतां लब्ध्वा भवति क्षीणा। अतः शकुन्तलां प्रति दुष्यन्तस्यायं

प्रणय आसीत् क्षणभङ्गुरः। किञ्च, यः प्रणयः शारीरः, काममलिनः, गुरुभिरननुमतश्च स तु मुनिशापादीन् निमित्तीकृत्य भवति विध्वस्तः। दुष्यन्त-शकुन्तलयोः अयं प्रणयोऽपि नासीत् शकुन्तलायाः दुष्यन्तस्य वा गुरुजनैरनुमोदितः। गान्धर्वरीत्यनुसारेण विवाहसमये शकुन्तलया तातस्य कण्वस्य अनुमतिर्न याचिता, राज्ञा दुष्यन्तेनापि राजधानीस्थितानां जननीप्रभृतीनां गुरुजनानाम् अनुमतिर्न गृहीता। अपि च अयं कामजप्रणयः अतिथिसेवारूपात् कर्तव्यकर्मणः शकुन्तलां निवर्तयामास। पतिगतचिन्तैकनिष्ठा शकुन्तला एकदा उटजद्वारि उपविश्यापि आतिथ्यस्वीकाराय समागतस्य महर्षिदुर्वाससः आह्वानवाणीं न निशम्य महर्षेः अवमाननां कृतवती। अतएव महर्षेः दुर्वाससः अभिशापेन७ अयं कामजः गुरुभिरननुमतः कर्तव्यविघातकश्च दुष्यन्-शकुन्तलयोः प्रथमप्रणयः विध्वस्तः।

किन्तु यः प्रणयः कामगन्धविरहितः शरीरसम्पर्करहितः, विशुद्धः तपोपूतः स तु स्वर्गीयः शाश्वतश्च। अतएव दृष्टं यत् दुष्यन्तेन प्रत्याख्याता शकुन्तला एकवेणीधरा सती कठिनं तपश्चरन्ती मारीचाश्रमे कालं यापितवती। तत्र दुष्यन्त-शकुन्तलयोः शारीरमिलनस्य कापि सम्भावना नासीत्। परन्तु मनसा स्वामिनं प्रति एकचित्ता सती शकुन्तला सर्वं कर्तव्यजातं निष्पादयन्ती तपोधर्मे निरता सती सन्तानं पालितवती। विरहानलेन दग्धा अपवित्रा सा विशुद्धा सञ्जाता। तदुक्तम् – हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा इति। अपरतः मत्स्योदरप्राप्तम् अभिज्ञानम् अवलोक्य प्राप्तस्मृतिः राजापि अनुशोचनानलेन दग्धः सन् विशुद्धो जातः। विरहदशायां प्रियां प्रति तस्य यः अनुरागः स आसीत् निर्मलः अपापविद्धः। अतः मारीचाश्रमे दुष्यन्त-शकुन्तलयोः यः प्रणयः संवृत्तः स आसीत् अपार्थिवः अशारीरः निष्कलुषः स्वर्गीयश्च। स आसीत् गुरुजनसम्मतः मारीचस्य आशीर्वादधन्यः। अतएव नास्ति तादृशस्य प्रणयस्य विनाशसम्भावना। स प्रणयः शाश्वतः। अत्र महाकविकालिदासस्य अयं प्रच्छन्न उपदेशः यत् यदि प्रणय कर्तव्य एव तदा एतादृशो विशुद्धः प्रणय एव श्रेयान्। न हि केनापि भ्रमादपि मोहजप्रणये पदं कर्तव्यम्। दुष्यन्त-शकुन्तलयोः कण्वाश्रमे संवृत्तं यत् पार्थिवमिलनं तत् स्वर्गीयतामापादयन् कविः प्रागुक्तमेव उपदेशं दत्तवान्। अतएव पाश्चात्यमनीषिणः ग्येटेमहोदयस्य तथा रवीन्द्रनाथठाकुरस्य

मतानुसारं – यदि कुसुमस्य फलत्वे तथा मर्त्यस्य स्वर्गत्वे परिणमनं मृग्यं तदा अध्येयम् अभिज्ञानशकुन्तमिति नाटकम्।

**चतुर्थतः**, अभिज्ञानशकुन्तमिति नाटकस्य अन्यतमं श्रेष्ठनिमित्तं हि तत्र महाकविना प्रकृतौ प्राणसंयोगः कृतः। इदानीं प्राय एव मनुष्याणां नैतिकाधःपतनं दरीदृश्यते। प्रकृतिः हि नानाविधकारणात् अस्माभिरेव मनुष्यैः शनैः शनैः विनष्टा सञ्जायते। बहवो वृक्षाः कर्तिता भवन्ति। विज्ञानस्य उन्नतिरेव इदानीं मानविकतायाः अवनतिः संवृत्ता। महाकविना कालिदासेन तु तपोवनप्रकृतिमध्ये मनुष्यभावः समारोपितः। महाकवेः एतदेव हि नाट्यनिर्माणवैचक्षण्यं यत् तेन कण्वतपोवने वृक्षविहगादयो मानुषायन्ते। वाक्-हीनाः ते मुखराः सञ्जाताः। अत्र केचिद् दृष्टान्ता यथा –

१. पतिगृहगामिन्याः शकुन्तलायाः अङ्गसज्जार्थम् उपयोगि वेशाभरणादिकं वनदेवताभिरेव आपर्वभागोत्थितैः हस्तैः प्रदत्तम् –

"**क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतम्**
**निष्ठ्यूतश्चरणोपरागसुभगो लाक्षारसः केनचित्।**
**अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-**
**र्दत्तान्याभरणानि नः किसलयोद्भेदप्रतिद्वन्द्विभिः।।**" (४/५) इति।

२. महर्षिकण्वेन यदा शकुन्तलायाः पतिगृहगमनस्य कृते तपोवनतरूणां सकाशात् अनुमतिः संप्रार्थिता तदा कोकिलाः स्वभावत एव रुतं चक्रुः। अत्र कविना कल्पितं यत् कोकिलरवव्याजेन वृक्षैः अनुमतिः प्रदत्ता। तदुक्तम् –

**"अनुमतगमना शकुन्तला तरुभिरियं वनवासवन्धुभिः।**
**परभृतविरुतं कलं यतः प्रतिवचनीकृतमेभिरात्मनः।।"** (४/१०)

इति।

३. कालिदासेन वर्णितं यत् शकुन्तलाया भाविनं विरहम् आशङ्क्य आश्रमस्य हरिण्यः गृहीतमपि ग्रासं मुखाद् उद्गिरन्ति, मयूराः नृत्यं परित्यजन्ति, पाण्डुपत्रमोचनच्छलेन पादपाः अश्रूणि विसृजन्ते इव प्रतियीरे-

**"उद्गलितदर्भकवला मृगाः परित्यक्तनर्तना मयूराः।**
**अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः।।" (४/१२) इति।**

ततः शकुन्तलाया वचनमिदम् – "वनज्योत्स्ने! चूतसङ्गतापि मां प्रत्यालिङ्ग इतोगताभिः शाखावाहाभिः। अद्य प्रभृति दूर-परिवर्तिनि ते खलु भविष्यामि।" इति।

४. शकुन्तलायाः पतिगृहगमनकाले प्रकृतिं प्रति कण्वमुनेः उक्तिरपि प्रकृतिं प्रति महाकवेः प्रीतिः प्रकाशिता। तथाहि –

**"पातुं न प्रथमं व्यवस्यति जलं युस्मास्वपीतेषु या**
**नादत्ते प्रियमण्डनापि भवता स्नेहेन या पल्लवम्।**
**आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः**
**सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्।।" (४/९) इति।**

५. मातृहारा हरिणशावकः शकुन्तलया मातृस्नेहेन पालितः। कुशकण्टकेन तस्य मुखं क्षतविक्षतं भवति चेत् शकुन्तला इङ्गुदीतैलेन तत् क्षतम् उपशमितवती। प्रकृतिं प्रति शकुन्तलायाः एतादृशप्रीतेः प्रतिदानरूपेणैव आश्रमस्य पशवः विहगाः वृक्षाश्च तां प्रति कृतज्ञाः। अतः गमनकाले स हरिणशावकः शकुन्तलायाः वसनाञ्चलम् आकर्षितवान्। अतएव प्रकृतिं प्रति तथा पशुपक्षिणः प्रति कीदृशी प्रीतिः अस्माभिः करणीया सा महाकविकालिदासेन अस्मिन् नाटके उपदिष्टा।

**पञ्चमतः**, पतिगृहे पालनीयतया यः कर्तव्योपदेशः महर्षिकण्वमुखेन महाकविकालिदासेन शकुन्तलाम् उद्दिश्य प्रदत्तः स हि सर्वेषु कालेषु एव कुलवधूनाम् आदर्शभूतः। तथाहि उक्तम् –

**"शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने**
**भर्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः।**
**भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी**
**यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः।।" (४/१८) इति।**

अस्यार्थः - पतिगृहं गत्वा श्वशुरादिगुरुजनान् सेवस्व। सपत्नीजने प्रियवयस्याव्यवहारं कुरु। स्वामिना अपमानितापि तस्य प्रतिकूलं नाचर। सेवकवर्गे दाक्षिण्ययुक्ता भव। भोग्यवस्तून् प्राप्यापि गर्वशून्या भव। अनेन प्रकारेण युवतयः गृहलक्ष्मीपदं प्राप्नुवन्ति। विपरीताचारकारिण्यः स्त्रियस्तु कुलस्य कण्टकस्वरूपा भवन्ति।

**षष्ठतः,** षष्ठाङ्के धीवरवृत्तान्तोपस्थापनेनापि महाकविना तदीयः नीतिबोधः प्रकाशितः। तत्र राजश्यालकेन यदा धीवरस्य जीविका उपहसिता तदा पैत्रिकजीविकायाः अवमाननकारणात् सः अतीव क्रुद्धः सन् उक्तवान् – यदेव कार्यं वंशपरम्परया आगतं, तद्धि निन्दितमपि कदापि न वर्जनीयम्। वेदज्ञः ब्राह्मणः दयार्द्रहृदयः सन्नपि यज्ञार्थं पशुहननरूपं निष्ठुरकार्यं करोति। तथाहि उक्तम् –

**"सहजं किल यद्विनिन्दितं न खलु तत् कर्म विवर्जनीयम्।**
**पशु-मारण-कर्म-दारुणोऽनुकम्पा-मृदुकोऽपि श्रोत्रियः।।" (६/१) इति।**

श्रीमद्भगवद्गीतायामपि अस्मिन् विषये भणितम् – "सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्"[८] इति। अत्र जातिविद्वेषं अस्माकं समाजात् समूलम् उत्पाटयितुं धीवरमुखेन कालिदासस्य उक्तिरियं समादरणीया।

**सप्तमतः**, अभिज्ञानशकुन्तलमिति नाटकस्य उत्सो हि महाभारतस्य आदिपर्व, पद्मपुराणञ्च। तत्र महाभारते दृश्यते यत्, महाराजो दुष्यन्तः लोकापवादभयादेव शकुन्तलां प्रत्याख्यातवान्। तत्र तु दुष्यन्त-शकुन्तलयोः विवाहवृत्तान्तास्मरणरूपः दुष्यन्तस्य स्मृतिभ्रमवृत्तान्तः नोपस्थापितः। वस्तुतस्तु महाभारते राजा दुष्यन्तः कामुकस्वभावरूपेण वर्णितः महाकविव्यासदेवेन। तत्र स्वस्य कामुकचरित्रवशात् शकुन्तलां कण्वतपोवने परिणीय तया सह सहवासं कृत्वा पश्चात् लोकापवादभयात् तां परित्यक्तवान्। परवर्तिनि काले दैववाण्या सर्वैरुभयोः विवाहवृत्तेऽविगते दुष्यन्तेन शकुन्तला पत्नीतया स्वीकृता इति ज्ञायते। अतः महाभारते वर्णितोऽयं कपटः, मिथ्याचारी, कामुकः दुष्यन्तः अभिज्ञाननाटकेऽपि अक्षततया वर्णितो भवेत् तदा तु महद्धानिः स्यात्। महाकविः

कालिदासः दुर्वाससः शापस्यावतारणद्वारा दुष्यन्तस्य कामुकादिस्यभावमाच्छाद्य शकुन्तलापरित्यागे हि दुर्वाससः शापद्वारा जनितां शकुन्तलाविस्मृतिमेव कारणत्वेन उपस्थाप्य दुष्यन्तस्य चरितस्य नैर्मल्यं प्रकाशयामास। न हि मधुकरवृत्त्या स्वभावत एव सकृत्कृतप्रणयां शकुन्तलाम् अपवादभयेन राजा प्रत्याख्यातवान् , किन्तु दुर्वाससः शापप्रभावादेव अजानता एव दुष्यन्तेन एतादृशं प्रत्याख्यानं विहितम्। कामलोलुपः, कपटः राजा दुष्यन्तः महाकवेः कालिदासस्य वर्णनचातुर्येण आदर्शनृपतिरूपेण आदर्शपतिरूपेण च वर्णितः। अतः अत्रापि आदर्शनृपतेः चरित्रवर्णनावसरे महाकवेः नीतिबोधः लक्षणीयः।

एतद्व्यतिरिच्य, अस्मिन् नाटके बहुत्र महाकवेः नीतिबोधः प्रकाशितः। अधस्तात् केचिद् दृष्टान्ताः उपस्थाप्यन्ते-

i) **“आ परितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्।**
**बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः।।” (१/२)**

अर्थः – यावत् पण्डितानां तुष्टिविधानं न भवेत् तावत् अभिनयनैपुण्यं यथार्थमिति वक्तुं न शक्यते। यतः शिक्षितानामपि मनः स्वकीययोग्यताविषये निःसंशयं न भवतीति।

ii) **“भवन्ति नम्रास्तरवः फलागमैर्नवाम्बुभिर्दूरविलम्बिनो घनाः।**
**अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम्।।” (५/१२)**

अर्थः – फलानाम् आगमनेन वृक्षाः स्वभावत एव नता भवन्ति। वर्षाकाले नवजलभारेण जलधराः धरण्याः सन्निकटे समागच्छन्ति। ये तु सत्पुरुषाः ते हि धनानि संप्राप्यापि विनीता एव भवन्ति। एष पूर्वोक्तस्वभावः सर्वेषामेव परोपकारिणाम् भवति।

**iii) “विनीतवेषेण प्रवेष्टव्यानि तपोवनानि नाम”**

अर्थः – यदा कोऽपि तपोवने प्रवेशं करोति सः अवश्यमेव विनीतवेशेनैव प्रवेशं कुर्य्यात्।

**iv) “अर्थो हि कन्या परकीय एव तामद्य संप्रेष्य परिग्रहीतुः।**
**जातो ममायं विशदः प्रकामं प्रत्यर्पितन्यास इवान्तरात्मा।।” (४/२२)**

अर्थः - कन्या हि वस्तुतः परकीयः अन्यस्वामिको वा। इदानीं शकुन्तलां स्वानिनः सकाशं प्रेरयित्वा कण्वमुनेः चित्तं पुनरर्पितनिक्षेपवत् सातिशयं चिन्तामुक्तं सञ्जातमिति।

**v) यो हनिष्यति वध्यं त्वां रक्ष्यं रक्षिष्यति द्विजम्।**
**हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः।। (६/२८)**

अर्थः - यः शरः वधयोग्यं त्वां प्रहरिष्यति, रक्षणीयस्य द्विजस्य विदूषकस्य रक्षणं करिष्यति। तत्र दृष्टान्तो हि – हंसः जलमिश्रितदुग्धतः जलं परित्यज्य दुग्धमेव स्वीकरोतीति।

## उपसंहृतिः(Conclusion)

उपर्युक्तालोचनाद् एतद् वक्तुं शक्यते यत् न केवलम् उपमाप्रयोगेन, ललितपदयोजनेन, काव्यसुषमया, चरित्रचित्रणेन, प्रकृतिस्वरूपवर्णनेन वा अभिज्ञानशकुन्तलमिति काव्यं परममुत्कर्षं लेभे, अपि च नाटकीयकथासूत्रविनिर्माणे तथा कथाप्रसरोपयोगिचरित्रसमावेशने अपि महाकवेः दाक्ष्यमनुपमम्। महाभारतकथोपजीव्यमपि नाटकमिदं कविकल्पनाया इन्द्रजालयष्टिस्पर्शेन नवकलेवरं धृतम्। तत्र नवकलेवरस्यास्य सर्वत्रैव कविना स्वात्मनः नीतिबोधत्वं प्रकाशितं येन महाकवेः सकलकविषु श्रेष्ठत्वं तथा अन्यतमत्वम् प्रकाशितमिति शम्।

## पादटीका

१. अभिज्ञानशकुन्तलम् (१/१०-११)
२. मनुसंहिता –( ७/४५)
३. तत्रैव – (७/४७)
४. तत्रैव – (७/४६)
५. अभिज्ञानशकुन्तलम् – (१/२०)
६. मनुसंहिता –(२/६)
७. “विचिन्तयन्ती यमनन्यमानसा तपोधनं वेत्सि न मामुपस्थितम्।
स्मरिष्यति त्वां न स बोधितोऽपि सन् कथां प्रमत्तः प्रथमं कृतामिव।।”(४/१)

८. श्रीमद्भगवद्गीता - (१८/४८)

**सहायकग्रन्थाः –**

१. BOSE, R.M. (1976), ABHIJNANA -SAKUNTALAM, MODERN BOOK AGENCY PRIVATE LTD.

२. चक्रवर्ती, डा. सत्यनारायणः,(२००२)अभिज्ञानशकुन्तलम्, कोलकाता ,संस्कृत पुस्तक भाण्डार।

३. द्विवेदी, रेवाप्रसादः (१९७६), अभिज्ञानशकुन्तलम्(कालिदासग्रन्थावली), वाराणसी, काशी-हिन्दुविश्वविद्यालयः।

४. वन्द्योपाध्यायः, धीरेन्द्रनाथः , (१९८८),संस्कृतसाहित्येर इतिहास, कोलकाता ,पश्चिमवङ्ग राज्य पुस्तक पर्षत्।

५. वन्द्योपाध्यायः, सुशान्तः, (१४२१ वङ्गाब्दः), श्रीमद्भगवद्गीता, कोलकाता, ओरियेण्ट लाइब्रेरी।

६. वसुः, डा. अनिलचन्द्रः, (१९९९), मनुसंहिता, कोलकाता , संस्कृत वुक डिपो।

७. विद्याभूषणः, राजेन्द्रनाथः , (१९९५) कालिदासेर ग्रन्थावली, वसुमती।

# वेदान्तेषु क्रममुक्तिविमर्शः

**अर्घ्यदीप-रायः**
खलिसानी-महाविद्यालयः चन्दननगरम्,
हुगली, पश्चिमबङ्गः

**सारांशः –**

जीवन्मुक्ति-विदेहमुक्तिरित्येतयोरूर्ध्वं का नाम क्रममुक्तिरिति निरूपणीया। यः खलु ब्रह्मोपासकोऽस्मिन् देहे वर्त्तमाने सति पूर्णं ब्रह्मज्ञानं प्राप्य देहान्ते भगवत्प्रसादान्मुक्तो भवति, तस्य सद्यमुक्तिः; किन्तु यस्य तु न तथा, स देहपातानन्तरमस्मात् शरीरादुत्क्रान्तः सन् पुण्यवशात् ब्रह्मलोकान् प्राप्नोति चेत् न ततः पुनरस्मिन्संसारे पुनरावर्तते। तत्रैव स्थित्वा साधनद्वारा पूर्णं ब्रह्मज्ञानं प्राप्य मुक्तो भवति। सैव क्रममुक्तिः। किन्तु अस्मिन् सन्दर्भे साम्प्रदायिकानां मतभेदो नितरां दृश्यते एव। तत्रापि श्रुतिवाक्यानामर्थनिर्धारणे समन्वयाभाव एव कारणमिति मन्ये। अतो भगवता ब्रह्मसूत्रकारेण क्रममुक्तिविषये सिद्धान्तसमन्वयो यथा उपन्यस्तः तत्सर्वमिदानीम् अस्मिन् सन्दर्भे सविस्तारमालोच्यते।

**कूटशब्दाः**– उत्क्रान्तिः, अर्चिरादिदेवता, कार्यब्रह्म, परंब्रह्म, विदेहमुक्तिः, भेदाभेदः।

**मूलपाठः-**

जीवस्य देहान्ते सति सप्तदशावयवविशिष्टसूक्ष्मशरीरं पञ्चभौतिकात् स्थूलदेहादुत्क्रामति। तत्र आदौ सूक्ष्मशरीराङ्गभूतवाङ्मनसि सम्पद्यते[1]। वागेन्द्रियस्यैव मनसि सम्पादनं बोध्यम्, न तु वाग्वृत्तेः, "वक्त्युपरमे वागिन्द्रियस्य प्रमाणान्तरेणानुपलभ्यमानत्वात्"[2] इति। ततः वाचमनु चक्षुरादि-सर्वाण्यपीन्द्रियाणि मनसि सम्पद्यन्ते। तत्रापि श्रुतिः, "तस्मादुपशान्तस्तेजा पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः" इति। अत्र सम्पत्तिस्तु न लयरूपा, अपि तु संयोगरूपा ज्ञेया, यतोऽनुपादानभूते मनसि वाचो लयो न सम्भवति। अपि च "अविदुषा देहान्तरप्रतिपत्तौ वागाद्यनुवृत्तेरपेक्षितत्वात्, विदुषो वागादीनां लयस्य परमात्मनि वक्ष्यमाणत्वाच्च"[3] अत्र सम्पत्तिशब्दस्य न लयरूपोऽर्थो विवक्षित इति। ततः वागिन्द्रियसंयुक्तमनः प्राणे सम्पद्यते। एवं सर्वाणि इन्द्रियाणि प्राणे एव संयुज्यन्ते। प्राणश्च स्वाध्यक्षभूते जीवात्मनि संयुज्यते। ननु "प्राणस्तेजसि"[5] इत्यादिना प्राणानां तेजसि एव विलय इत्युक्तत्वात् श्रुतिविरोध एवेति चेत्, उच्यते, तन्न। तत्र तु जीवविशिष्टप्राणानां तेजसि लयस्य विवक्षितत्वात्। अतः आदौ जीवात्मनि संयुक्ताः सन्तः

ततः प्राणास्तेजसि समवलीयन्ते इति स्वीकार्यम्[6] अन्यथा, "तमुत्क्रान्तं प्राणोऽनूत्क्रामति"[7] इति श्रुतेर्विरोधापत्तिः स्यात्। अपि च "एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायान्ति"[8] इत्यादिश्रुतिवाक्यादपि प्राणस्य जीवे एव लयः स्पष्टतया प्रतीयते। उक्तञ्च श्रीमच्छङ्कराचार्येण, "एवमेवेममात्मानं भोक्तारमन्तकाले मरणकाले सर्वे प्राणा वागादयोऽभिसमायन्ति"[9] इति। अतो विशीर्णे देहे जीवस्योत्क्रान्तिः येन क्रमेण अभिसम्पद्यते तदेवं ज्ञातव्यम्, म्रियमाणस्य वाङ्मनसि आदौ उपसंह्रीयते ततः मनः प्राणे सम्पद्यते ततः प्राणाः स्वाध्यक्षभूते जीवात्मनि अवलीयन्ते, जीवस्तेजसि पुनस्तेजो देवतायां प्रशाम्यति इति। एतावता उक्तमुत्क्रान्तिप्रकारं सर्वेषां विदुषामविदुषामेव समानमिति द्वैताद्वैतसिद्धान्तः।

ननु "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिता। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते"[10], इत्यादिषु कठश्रुतिषु विदुषोऽत्रैव अमृतत्वप्राप्तिश्रवणाद् अविदुष एव उत्क्रान्त्यादि स्यादिति चेत्, उच्यते, मैवम्। यतः श्रुतिष्वेव एवमप्युच्यते, "अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते, स ओमिति वा होद्वा मीयते स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम्"[11] इति; अपि च "तस्य हैतस्य हृदयाग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्द्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः"[12] इति; पुनरपि "शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्द्धानामाभिनिःसृतैका। तयोर्द्धमायान्नमृतत्वमेति विष्वङ् उत्क्रमणे भवन्ति … … …"[13] इति। अतो मृत्युकाले यदा जीवात्मा अस्मात् शरीरात् निर्गच्छति तदा अब्रह्मज्ञ-वैदिककर्माचारी यथोक्तं सूर्यरश्म्यादिमार्गमनुसृत्य ऊर्ध्वं स्वर्गादिलोकं प्राप्नुवन्ति, एवञ्च ब्रह्मज्ञपुरुषाः ओम्कारमनुध्यायन् ततो ऊर्ध्वं गत्वा अचिरमेवादित्यमाप्नुवन्ति। आदित्य एव ब्रह्मज्ञपुरुषस्य ब्रह्मलोकप्राप्तिविषये द्वारभूतः, पुनरब्रह्मज्ञपुरुषस्य ब्रह्मलोकमार्गे प्रतिबन्धक-कपाटस्वरूप इति। अपि च एकोत्तरशतनाड्यः सन्ति हृदयदेशे यास्वेका ऊर्ध्वं मूर्द्धानमभिगच्छति। तेन पथा ब्रह्मविद् ऊर्ध्वं गच्छन् अमृतत्त्वमाप्नोति। इतराः तु संसाराभिमुखिनाड्यः यासु सञ्चरन्तोऽब्रह्मज्ञा जीवा अस्मिन्संसारे एव पुनरावर्त्तते। तत्रापि मूर्द्धन्-उत्क्रान्तिः विदुषामेव, इतरेषां तु चक्षुरादिभ्य इति विशेषः। तेन 'शतञ्चैका … …' इति छान्द्योग्यश्रुतिभिः इतरेषां समन्वयः स्यात्। अतः 'अत्र ब्रह्म समश्नुते'- इत्यादिश्रुतिषु यथा उक्तं, यत् जीवो यदा पूर्णतया निष्कामो भवति तदा मर्त्योऽपि अमृतो भवति, अस्मिन् देहे जीवन्नेवामृतत्त्वमाप्नोति, अथ,

ब्रह्मसाक्षात्कारजनितमानन्दमस्मिन्देहे एवानुभवति इति[14]; तेन ब्रह्मज्ञपुरुषस्य उत्क्रान्ति-निषेधस्तु नाभिव्यज्यते; तत्रैव अनन्तरश्रुतिषु ब्रह्मज्ञपुरुषस्यापि उत्क्रान्तेरुपदेश-श्रवणत्वात्, "शतञ्चैका … …." [15] इत्यादिछान्द्योग्यश्रुतेः पुनरुल्लेखत्वाच्च। अतोऽस्मिन् देहे ब्रह्मावाप्तिः यदुक्तं तत्र तस्य ब्रह्मोपासकस्य उपासनाकाले एव देहेन्द्रियसम्बन्ध-नाशराहित्येऽपि पूर्वोत्तरयोरघयोर्लोपे सति ध्रुवास्मृत्याख्यब्रह्मानुभूतिरेव लक्षिता, ध्रुवास्मृतेर्बृहत्त्वात्। उक्तञ्च भगवता ब्रह्मसूत्रकारेण, "समाना चासृत्युपक्रमादमृतत्वञ्चानुपोष्य"[16] इति। अत्र 'अनुपोष्य' इति 'उष दाहे' इति धातोः रूपम्। अतोऽस्य 'अदग्ध्वा देहसम्बन्धः' इत्येवार्थः। तस्मात्, लिङ्गशरीरस्य दाहात्प्राक् न परममोक्षोपपत्तिरिति बोध्यम्। तत्रापि श्रुतिः, "तस्य तावदेव चिरं यावन्न विमोक्षेऽथ सम्पत्स्य"[17] इति। पुनः देशविशेषं प्राप्यैव लिङ्गशरीरस्य लयः श्रुतिषु उपदिष्टः, "इमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति"[18] इत्यादिना। उक्तञ्च मुण्डकोपनिषदि, "वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः। ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे"[19] इति। अतः ये खलु संन्यासिनः शुद्धसत्त्वाः, वेदान्तविज्ञानं येष्वधिगतम्, ते मुमुक्षवो देहपरित्यागकाले ब्रह्मलोकान् समेत्य, अमृतत्वं प्राप्य मुच्यन्ते इति। किन्तु, अस्य मन्त्रस्य भाष्ये श्रीमच्छशङ्कराचार्येण एवमुक्तम्, " … … … बहुत्वात् ब्रह्मैव लोको ब्रह्मलोक एकोऽप्यनेकवत् दृश्यते प्राप्यते च। अतः बहुवचनं ब्रह्मलोकेष्वत ब्रह्मणीत्यर्थः। … … … परिमुच्यन्ते परिसमन्तान्मुच्यन्ते सर्वे न देशान्तरं गन्तव्यमपेक्षन्ते … … …। देशान्तरपरिच्छिन्ना हि गति संसारविषयैव। परिच्छिन्नसाधनसाध्यत्वात्। ब्रह्म तु समस्तत्वान्न देशपरिच्छेदेन गन्तव्यम् … … "[20] इति। अत्र वेदान्तविज्ञानप्राप्तेन विदुषा कथमेकोऽपि ब्रह्मलोकोऽनेकवत् दृश्यते इत्येतच्चिन्त्यम्। एकस्मिन्विषये बहुत्वदर्शनं तु आध्यासिको भ्रम एव। पुनर्यदि विदुषैव बहुत्वं दृश्यते प्राप्यते अपि, कथं तर्हि ब्रह्मणो बहुत्वाङ्गीकारे अनुपपत्तिरिति अद्वैतवादिभिः वक्तव्यम्। श्रुतेः स्वाभिमतं क्लेशकल्पितं व्याख्यानं तु न युक्तमिति मन्ये। अतो विदुषामपि उत्क्रान्त्यादि समानमेव इति सिद्धान्तः।

किञ्च, यद्यपि "यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छति"[21] इत्यादिना श्रुतिवचनेन दक्षिणायनमृतस्य चन्द्रमण्डलप्राप्तिरेव श्रूयते, किन्तु दक्षिणायने मृतस्यापि विदुषः न पुनरावृत्तिः इति भगवतो ब्रह्मसूत्रकारस्याभिमतम्, "अतश्चायनेऽपि दक्षिणे"[22] इति सूत्रितात्। नन्वत्र "शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते। एकया यात्यनावृत्तिमन्ययावर्तते पुनः"[23] इति गीतोक्तवचनेन विरोध इति चेत्, उच्यते,

तन्न। शास्त्रवचनमिदं तु अविद्वद्विषयमिति ज्ञेयम्, न तु विद्वद्विषयम्। विदुषां तु उत्तरपूर्वयोः शुभाशुभयोः ब्रह्मज्ञानेन विनाशसम्भवात्, पुनः देहपाते सति प्रारब्धकर्माणामपि अभावान्नास्ति पुनरागमनाशङ्का; अतो न मार्गविशेषे फलविशेषोऽपि शङ्क्यः। ननु कथं तर्हि भीष्मस्य उत्तरायणप्रतीक्षा इति चेत्, उच्यते, "धर्मप्रवर्तनार्थं स्वच्छन्दमरणशक्तिज्ञापनार्थं च"[24] इति। अपि च, गीतावचनेषु ब्रह्मनिष्ठान् प्रति देवयानाख्यसृति, पुनः कर्मनिष्ठान् प्रति पितृयानाख्यसृति यत्र दृश्येते, तत्रापि गतिद्वयस्यावबोधनमेव इष्टम्, न तु विदुषां कृते कालविशेषावधारणम्। उक्तञ्च श्रीनिवासाचार्येण, "यतश्चैते स्मार्त्ते स्मृतिविषयभूते ज्ञानाङ्गत्व-कर्माङ्गत्वाभ्यां स्मरणार्हे 'नैते सृति पार्थ! जानन्योगी मुह्यति कश्चने'त्युपसंहारात्"[25]। अपि च कालशब्देनात्र स्मृतौ न समयविशेषः बोध्यः, कालाभिमानिदेवतायुक्तो मार्ग एवात्र कालशब्दस्यार्थः, अग्निधूमयोः कालत्वासम्भवात्[26]।

श्रुतौ तु एवमपि उक्तं यद् ब्रह्मज्ञपुरुषाणां देहान्ते शवकर्माभावेऽपि ते अर्चिराभिमानिनीं देवतामेव प्रतिपद्यन्ते। अतः अर्चिर्देवताया अहरभिमानिनीं देवतां ततः शुक्लपक्षदेवतां ततः उत्तरायणदेवतां ततः संवत्सरदेवतां ततः आदित्यं प्राप्नुवन्ति। अस्मिन् पथि गच्छन्तो न पुनरिह संसारे आवर्तन्ते। उक्तञ्च बृहदारण्यकेऽपि, "ते य एवमेतद् विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते ... ... ... परावतो वसन्ति तेषां न पुनरावृत्तिः"[27]।

ननु अर्चिरादिना ब्रह्मप्राप्तिः यत् श्रुतिषु विधीयते किं सा कार्यब्रह्मविषयिका उत परब्रह्मविषयिका इति जिज्ञासा नितरामापतेत्। तत्र बादरिमुनिना एवमुक्तम्, यद् अर्चिरादिदेवताः उपासकान् कार्यभूतहिरण्यगर्भमेव प्रापयति, यतः कार्यब्रह्म एव देशविशेषवत्वेन अवगम्यते, न तु परब्रह्म। पुनः "पुरुषोऽमानव एत्य ब्रह्मलोकान् गमयति" इत्यादौ ब्रह्मलोकपदे बहुवचनदर्शनादपि एतदेव ज्ञायते यत् अर्चिरादिदेवताः कार्यब्रह्म एव गमयन्ति इति। स्यादेतत्, कथं तर्हि 'नावर्त्तन्ते', 'अमृतत्वमेति' इत्यादिना अपुनरावृत्तिश्रवणं संगच्छेत इति चेत्, उच्यते बादरिमुनिना, न हि हिरण्यगर्भप्राप्तावपि अपुनरावृत्तिः अनुपपन्ना, यतः महाप्रलये हिरण्यगर्भस्यापि लये सति तदध्यक्षेण हिरण्यगर्भेण सह तल्लोकवासिनः सर्वे परब्रह्मभावमाप्नुवन्ति। अतः महाप्रलयात् प्राक् पुनरावृत्तिस्मृतिः, पुनः महाप्रलयान्ते अपुनरावृत्तिश्रुतिरुपपद्यते। तत्रापि "ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चारे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्"[28], इति स्मृतिः प्रसिद्धा।

आचार्यजैमिनिः तु तद्विपरीतमेव मन्यते। अर्चिरादिदेवता विद्वान्पुरुषान् परब्रह्म एव प्रापयन्ति इति तस्य मतम्। यतो ब्रह्मशब्देनात्र ['य एनान् ब्रह्म गमयति'] परब्रह्मैव

अभिधीयते "तस्यैव शक्यत्वेन तत्रैव वृत्तित्वादन्यथा गौणत्वप्रसङ्गः, 'यत् परः शब्दः स शब्दार्थः' इति न्यायात्"[29] इति; अतो ब्रह्मशब्दस्यात्र कार्यब्रह्मपरत्वे अभिधानं चेत् गौणत्वमेव स्वीकार्यम्, अन्यथा तु 'ब्रह्मणं गमयति' इत्येव स्यात्। अत उक्तं भगवता ब्रह्मसूत्रकारेण, "परं जैमिनिर्मुख्यत्वात्"[30], "दर्शनाच्च"[31] इति। ननु "ते ब्रह्मलोके तु परान्तकाले" इत्यादौ लोकशब्दे बहुवचनप्रयोगात् पुनः देशविशेषस्य उल्लेखात् अत्र कार्यब्रह्म एव विशेषितमिति चेत्, उच्यते, लोकप्रदेशबाहुल्यविवक्षया अत्र बहुवचनस्य प्रयोगो न दोषाय, "ये लोका मम विमलाः सकृद्विभान्ति ब्रह्माद्यैः"[32] इत्यादिश्रीभगवद्वचनात्। पुनः देशविशेषवर्त्तित्वेनापि परब्रह्मणः कार्यब्रह्मत्वं नाशङ्कितव्यम्, "योऽस्याध्यक्षः परमे व्योमन् तिष्ठति तद्विष्णोः परमं पदम्"[33] इत्यादिश्रुत्या सर्वगतस्यापि परब्रह्मणः देशविशेषवर्त्तित्वावगमात्। ननु "प्रजापतेः सभायां वेश्म प्रपद्ये"[34] इति श्रुत्या कार्यब्रह्मविषयकसङ्कल्पप्राप्तिरेव अवगम्यते इति चेत्, उच्यते, मैवम्; इयं श्रुतिरपि परब्रह्मविषयिका एवेति ज्ञेया, "आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतम् स आत्मा"[35] इत्यादिना परब्रह्मण एव अधिकारात्; अपि च "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि"[36] इत्यादिना सम्भाव्यमानस्य ब्रह्मलोकस्य अकृतत्वस्य सर्वबन्धविमुक्तत्वस्यापि अवगमात् इति। स्यादेतत्, ननु कथं तर्हि "तं वैद्युतान् पुरुषो मानस एत्य ब्रह्मलोकान् गमयति"[37] इत्यादौ ब्रह्मलोकानित्यत्र बहुवचनव्यपदेश इति चेत्, उच्यते, यथा 'निषादस्तपति' इत्यत्र 'निषादानां स्तपति' इति षष्ठीसमासस्वीकारे पूर्वपदे तत्सम्बन्धिलक्षणापत्या 'निषाद एव स्थपतिः' इति कर्मधारय एव स्वीकार्यः, तथैव, 'ब्रह्मैव लोकः' इति इहापि कर्मधारये स्वीकृते सति न विरोधापत्तिः। पुनः एकवचनार्थे निश्चितेऽपि बहुवचनस्य प्रयोगो न दुर्लभः, यथा 'अदितिः पाशान् प्रमुक्ते'ति अत्र पाशस्य एकत्वेऽपि बहुवचनप्रयोगदर्शनात् इति।[38]

अद्वैतवादिन एवं मन्यन्ते यत्, निर्गुणब्रह्मविदो गतिः नोपपद्यते, निर्गुणब्रह्मणः सर्वगतत्वात् नित्यप्राप्तत्वात्, प्राप्तस्य पुनः प्राप्त्ययोगात्। अतः क्रममुक्तिस्तु सगुणब्रह्मविद एव भवति। ब्रह्मलोकेषु ब्राह्मी-ऐश्वर्योपभोगान्ते कल्पक्षये सद्यमुक्तिः लभ्यते इत्यतः सा क्रममुक्ति इत्युच्यते। किन्तु यदि कोऽपि सगुणब्रह्मोपासको ब्रह्म-लोकेषु स्थितोऽपि भोगवितृष्णः सन् निर्गुणब्रह्मविद्यानुशीलनद्वारा निर्गुणब्रह्मज्ञानमाप्तुं समर्थो भवेत्, तर्हि कल्पान्तात् प्रागपि तस्य सद्यो मुक्तिः भवितुमर्हति। अपि च न केवलं मानवाः, देवाऽपि

महेन्द्रलोकतः सत्यलोकपर्यन्तनिवासिनः यदि ब्राह्मी-ऐश्वर्यभोग-वितृष्णाः सन्तः शमादिसाधनचतुष्टयमनुसृत्य निर्गुणब्रह्मविद्यां प्राप्नुवन्ति, तर्हि तत्रैव तेषामपि सद्यमुक्तिः भवेत्। किन्तु सगुणब्रह्मोपासनायां कञ्चिद्वैलक्षण्यमस्ति। तदेतत्, उपासनायाः सम्यकतया परिपाकेऽपि सर्वाङ्गयुक्तत्वेऽपि सिद्धसाधकेन सायुज्यमुक्ति एव लभ्यते। अथ पुनर्कल्पान्ते हिरण्यगर्भेण उपदिष्टः सन् निर्गुणब्रह्मविद्याप्राप्त्यन्ते चरममुक्तिं प्राप्नोति। सायुज्यमुक्तिप्राप्तस्य तु न पुनरावृत्तिः। किन्तु सगुणब्रह्मोपासकस्य उपासनायाः सर्वाङ्गयुक्तत्वाभावे सालोक्य-समीप्यादि मुक्तिरेव भवति, अतः तेषां पुनरावृत्तिरपि भवत्येव। सगुणब्रह्मविदः पञ्चविधो मुक्तिप्रकारः, तद्यथा सालोक्य-सामीप्य-सारूप्य-सार्ष्टि-सायुज्येति भेदात्। तत्र इष्टदेवतया सह एकस्मिन्नेव लोके निवासः सालोक्यमुक्तिः। समानविग्रहवत्त्वा तन्नाम इष्टदेवतासदृश-चतुर्भूजादिरूपता सारूप्यमुक्तिः। इष्टदेवतायाः पार्षदरूपेण तस्य समीपेऽवस्थानं सामीप्यमुक्तिः। सार्ष्टिस्तु आराध्यदेवतायाः समानैश्वर्यवत्त्वम्। सायुज्यं नाम सयुग्भावं समानदेहेन्द्रियाभिमानत्वम् इति[39]। सायुज्यमुक्तिरेव सगुणब्रह्मविदः सर्वोच्चगतिः। तत्प्राप्तस्य न पुनर्बाधाशङ्का, अतः क्रममुक्तिरपि तस्यैव भवति, न इतरेषाम्।

अपि च अद्वैतमते संसारिजीवस्यापि स्वरूपतो गतिर्नोपपद्येत। तत्रापि लिङ्गशरीरस्य गमनमेव गति-पदवाच्यम्। यतः अद्वैतमते जीवात्माऽपि स्वरूपतः सर्वगतः, तस्य विभुपरिमाणत्वात्, अत एव अपरिच्छिन्नोऽपि। न हि अपरिच्छिन्नस्य गतिरुपपद्यते। ननु, यदि एवमुच्येत, संसारीपुरुषः परमात्माभास एव, अतः परिच्छिन्न अपि; तत्रापि विकल्पद्वयमुपपद्यते, आभासस्य अवस्तुभूतत्वं वस्तुभूतत्वं वा इष्टम् इति। तत्राद्ये जीवात्मनः अधिकारित्वासम्भवात्, शशशृङ्गवत्। "द्वितीये तु असम्भवात्। यतः जीवस्य अणुपरिमाणत्वं मध्यमपरिमाणत्वं वा अद्वैतमते नाङ्गीक्रियेते, अतः गत्युपपत्त्यर्थं औपाधिकमणुत्वं तु स्वीकार्यमेव स्यात्। तथात्वे च लिङ्गशरीरस्यैव गतिर्न स्वरूपस्येति"[40] गतिश्रुतीनां बाध एव स्यात्।

किन्तु जीवात्मनः अर्चिरादिगतिः श्रौतमानसिद्धा, न तु कस्यापि स्वकपोलकल्पिता। अतः अद्वैतमतमिदं न समीचीनं मन्ये। अपि च श्रुतौ न केवलं सगुणब्रह्मोपासकस्य गतिरुक्ता, किन्तु निर्गुणब्रह्मोपासकस्यापि;[41] अतः सगुण-निर्गुणब्रह्मोपासनाभेदेन अर्चिरादिगतिनिरूपणं न युक्तम् इति द्वैताद्वैतसिद्धान्तः। उक्तञ्च भगवता ब्रह्मसूत्रकारेण "उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्", "अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम्"[42] इति। अस्यार्थः, स्थूलशरीरत्यागकाले सर्वकर्मक्षयेऽपि सूक्ष्मशरीरस्य लयेऽपि देवयानपन्था

उपपद्यते एव, यतः विदुषोऽपि "स तत्र पर्येति जक्षत् क्रीडन् रममानः" इत्यादिषु श्रुतिषु देहादिसम्बन्धलक्षणार्थ उपलभ्यते। स्थूलसूक्ष्मशरीरापगमेऽपि विद्याप्रभावेनैव गत्युपयोगिशरीरं तस्य तदानीमेवोत्पद्यते। किन्तु, अत्र श्रीमच्छङ्कराचार्येण एवं भाष्यं कृतम्, "सगुणासु विद्यासु गतिरर्थवती, न निर्गुणायां परमात्मविद्यायाम्"[43] इत्यादि। किन्तु तन्मतं न सूत्रकारसम्मतमिति मन्ये।

ननु "तेषामिह न पुनरावृत्तिः" इतिश्रुतौ 'इह' इति विशेषण-प्रयोगात् अस्मिन्कल्पे एव अपुनरावृत्तिरुक्ता, न तु कल्पान्तरे इति चेत्, उच्यते, तन्न; असम्भवात्। उक्तनिर्देशस्य सर्वकल्पव्याप्तत्वात्, यथेह कल्पे अनावृत्तिः तथैव कल्पान्तरेष्वऽपि बोध्या। तत्रापि मीमांसक-विचारमुपस्थापयति आचार्यैः, यथा, 'राजसूये ब्रह्मणो गृह्ये महिष्या' इत्यादिना द्वादशहवींषि विहितानि कर्त्तव्यानि। तत्र 'श्वोभूते निर्व्वपेत्' इति निर्दिष्टम्। तन्निर्देशानुसारत एकस्मिन् कृते पुनः अनन्तरदिवसेऽपि तेनैव विधिमूलेन अनन्तरस्यापि प्राप्तिर्भवेत्, 'श्वोभूतवदनुवादात्' इति मीमांसासूत्रात्, तथैव अत्र प्रकृतप्रस्तावे 'इह' शब्दस्य सर्वकल्पव्यापकत्वात् कल्पान्तरेऽपि अनावृत्तिः बोध्या।

आचार्यवल्लभप्रणीते शुद्धाद्वैतवादे ज्ञानकर्मसमुच्चयादेव मोक्षप्राप्तिरित्यभिप्रेयते। तन्मते औपनिषत्-ज्ञानस्यापि कर्म्मोपयोगित्वं यथा अस्ति तथा उपासनाया अपि ज्ञानरूपत्वं प्रत्यक्षम्।[44] अतः तन्मते मुमुक्षवो द्विधा विभज्यन्ते, ज्ञानिनः भक्ताश्चेति। तयोर्मुक्तिप्रकारोऽपि द्विविधः, सद्यमुक्तिः क्रममुक्तिश्चेति। तत्र ज्ञानिनां मध्ये ये 'त्वमेवाहं अहमेव त्वम्' इति अहंग्रहात्मकव्यतिहारध्यानेषु सिद्धा भवन्ति ते हि परमेश्वरानुग्रहात् प्राकृतसत्त्वादिगुणत्रयातीता भूत्वा निर्गुणब्रह्मतत्त्वमारोहन्ति, ते प्रारब्धक्षये निर्गुणब्रह्मणि प्रविशन्ति। तेषां लिङ्गशरीरं न उत्क्रामति। सैव ज्ञानिनः सद्यमुक्तिः। अस्यां मुक्तौ निर्गुण-अक्षरब्रह्मणि प्रवेशरूपं सायुज्यं लभ्यते, किन्तु तथा अपि जीवस्य मधुपिष्टस्वर्णरेणुवत् पृथगस्तित्वं तु तदानीमपि भवत्येव।[45] पुनः ये खलु निर्गुणब्रह्मतत्त्वोपासका अस्मिन् जन्मनि सर्व्वाणि प्रारब्धकर्माणि न अभुञ्जत, तेषां शिष्टकर्माणि ब्रह्मलोकेषु पूर्णतया नश्यन्ति। ततः मुच्यन्ते, अतः तेषां क्रममुक्तिः। ते हि आतिवाहिकादिना वाहिता देवयानादिना ब्रह्मलोकानेत्य प्रारब्धक्षयात् तत्रैव अक्षरनिर्गुणब्रह्म प्रविशन्ति। ब्रह्मलोकात्तु तेषां न पुनरावृत्तिर्भवति।

भक्तानां मध्ये ये पुष्टिमार्गीयसिद्धसाधकाः, तेषां न उत्क्रान्ति-गत्यागतिरस्ति। श्रीभगवतोऽत्यन्तानुग्रहभाजनानां तेषां लिङ्गशरीरं हृदयगुहायां प्रकटिते पुरुषोत्तमे विलीयते।

तस्मिन्नेव क्षणे तदात्मकदिव्यदेहं प्राप्य पुरुषोत्तमेन सह लीलात्मकं दिव्यभोगं च प्राप्नुवन्ति। उक्तञ्च अणुभाष्ये, "अथ पुष्टिलीलाप्रवेशानन्तरममृत उक्तरूपशरीरवान् भवति, ततोत्र अस्मिन्नेव शरीरे ब्रह्म सम्यगश्नुते। भगवता क्रियमाणलीलारसमनुभवतीत्यर्थः"[46]। कृत्स्नवैकुण्ठलोकः तेषां हृदयगुहायामेव प्रकटितं भवति। तेषामपि सद्योमुक्तिः इति विशेषः। किन्तु ये खलु मर्यादामार्गीयसिद्धभक्ताः तेषां क्रममुक्तिः। प्रारब्धक्षये स्थूलशरीरात् उत्क्रान्ताः ते देवयानेन वैकुण्ठाख्यं लोकमभिगच्छन्ति।[47] तत्र साक्षात्प्रकटितेन पुरुषोत्तमेन सह तेषां साक्षात्कारोऽतः तस्मिन्नेव विलयोऽपि भवति। अनन्तरं श्रीभगवता स्वकीयात् स्वरूपात् निष्काशिताः सन्तः ते पुरुषोत्तमात्मकं दिव्यं देहं प्राप्नुवन्ति, ततः पुरुषोत्तमेन सह लीलात्मकं भोगमपि प्राप्नुवन्ति।[48]

आचार्यभास्करप्रणीते औपाधिकभेदाभेदवादेऽपि क्रममुक्तिविषये एवमुक्तं यत्, ये खलु परब्रह्मोपासकाः ते सद्यमुक्तिं लभन्ते, किन्तु ये हिरण्यगर्भोपासकास्ते उपासना-प्रभावेनैव ब्रह्मलोकमेत्य तत्र ज्ञानोत्कर्षानन्तरं हिरण्यगर्भेण सह कल्पान्ते मुच्यन्ते, सा क्रममुक्तिः। ब्रह्मलोकेषु विदुषो ज्ञानोत्कर्षं यद्भवति तत्तु "छायातपयोरिव ब्रह्मलोके"[49] इत्यादिना श्रुतिवचनेनैवावगम्यते इति।

अथेदानीं अर्चिरादिगतपुरुषैः किं प्राप्यते इति विचार्यते। तत्र भगवता ब्रह्मसूत्रकारेण एतन्मन्यते यत्, 'नाम ब्रह्मेत्युपासीत' इति श्रुत्युक्तोपासका ये खलु नामादिप्रतीकमुपासन्ते तान् वर्जयित्वा आत्मानं परब्रह्मात्मकरूपेण ये उपासन्ते अपि च ये पञ्चाग्निविद्यावन्त-परब्रह्मोपासकाः ते उपासनानुसारेण परब्रह्म एव प्राप्यन्ते, "अप्रतीकालम्बनान्नयतीति वादरायण उभयथा दोषात् तत्क्रतुश्च"[50] इति सौत्रप्रमाणात्। आचार्यबादरिः यदाह, कार्यब्रह्मोपासकानेव अर्चिरादिदेवता नयति, न तु निर्गुणपरब्रह्मोपासीनानेवेति, न तत् युक्तं मन्ये, "अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेनरूपेणाभिनिष्पद्यते"[51] इति श्रुतिविरोधात्। पुनः आचार्यजैमिनिना यदुच्यते, परंब्रह्मोपासीनानेव अर्चिरादिदेवता नयति, न तु कार्यब्रह्मोपासकान्, तदपि न युक्तम्, "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति"[52] इति श्रुतिविरोधात्। अतः उक्तं वेदान्तकौस्तुभकारैः, "न तु कार्यं ब्रह्मोपासीनान्नयति, न वा परं ब्रह्मोपासीनानेव नयतीति नियमः। कुतः? उभयथा दोषात्।"[53] अतः उभयविधान् ब्रह्मोपासकान् नयति इति सिद्धान्तमाह भगवान् ब्रह्मसूत्रकारः "तत्क्रतुश्च" इत्यादिना। अस्यार्थः, यस्य यथा क्रतुः तं तथैव नयति, "यथा

क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवती"[54] ति श्रुतेः, अपि "तं यथा यथोपासते तदेव भवती"[55] त्यादिश्रुतेश्च। यस्तु परब्रह्मक्रतुः स परं ब्रह्म प्रतिपद्यते।[56]

ननु प्रतीकालम्बनोपासनायामपि ब्रह्म एव उपासीतम्, अतः प्रतीकोपासकानामपि अर्चिरादिगतिः तु स्यादेव इति चेत्, उच्यते, तन्न। श्रुतौ तु प्रतीकोपासकानां कृते न अर्चिरादिगतिः विहिता, अपि च तेषामुपासनानुरूपा गतिरेव इति, तद्यथा, "यावन्नाम्ना गतं तत्रास्य यथाकामचारो भवति"[57] इतिश्रुतिः। तेषु प्रतीकेषु प्रकाशितस्य ब्रह्मणः यादृशी शक्तिर्भवति, तदुपासकाः तान् सर्व्वान् प्राप्य तदनुगुणं कामाचारा भवन्ति। तेषां ध्येयत्वेन प्रतीकानामेव प्राधान्यात् न परब्रह्मोपासकत्वं, अतो न अर्चिरादिगतिरपीति। अतः "नामादिप्राणपर्यन्तस्य प्रतीकोपासनस्य गतिनिरपेक्षं परिमितं च फलं दर्शयति"[58] इति। अपि च, "वाग् वाव नाम्नो भूयसी" इत्यादिना श्रुत्या प्रतीकोपासनायाः फलविशेषोऽपि प्रदर्शितः। अतोऽद्वैतमतम् आचार्यमाधवमुकुन्देन एवं निराकृतम्, "ये तु दुराग्रहमाश्रित्य सगुणनिर्गुणभेदं वदन्तो निर्गुणब्रह्मविदो गत्यनुपपत्तिं सगुणब्रह्मविदश्च गत्या कार्यब्रह्मप्राप्तिमभ्युपगच्छन्ति, ते उपेक्षणीयाः, बादरिपक्षान्तःपातित्वात् सूत्रकारपक्षविरोधात्, श्रुतिहीनत्वाच्च। न हि ब्रह्मभेदे कार्यब्रह्मप्राप्तौ च श्रुतिरुपलभ्यते क्वचित्"[59], इति।

**उपसंहारः –**

द्वैताद्वैतसिद्धान्ते मोक्षस्तु न निर्गुणब्रह्मप्राप्तिलक्षणम्, अपि तु भगवद्भावापत्तिः स्वस्वरूपानन्दावाप्तिश्च इति। अतः ब्रह्मप्राप्तिरूपा मुक्तिः या अद्वैतवादिभिरुपपद्यते सा तु न सिद्धान्तसम्मता। अतः कार्यब्रह्मोपासक-परंब्रह्मोपासक-अविशेषेण सर्वेषां ब्रह्मोपासकानां उत्क्रान्ति-गतिरुपपद्यते। अद्वैतमते ब्रह्मणो विभुस्वभावत्वात् तत्प्राप्त्यर्थं देशविशेषं गमनं न अपेक्षते। अतः विदुषो गतिस्तत्र निराकृता। किन्तु द्वैताद्वैतसिद्धान्ते यतः मोक्षे निर्गुणब्रह्मभावप्राप्तेः प्रसङ्ग एव नास्ति, अतः ब्रह्मणः सर्वव्यापित्वेऽपि गत्यागतेरनुपपत्तिप्रसङ्गोऽपि नास्ति। जीवात्मना ब्रह्मणः अंशांशी-सम्बन्धो भेदाभेदः सम्बन्धो वा। सोऽपि स्वाभाविकः। अद्वैतमते तु जीवो ब्रह्मस्वरूपः सन्नपि विस्मृतस्वरूपः। स्वकण्ठस्थविस्मृतमणिहारस्य पुनः प्राप्तिवत् जीवस्य मोक्षः। अतः तन्मते मोक्षे ब्रह्मप्राप्तिरुपपद्यते एव। किन्तु तथा सति एतदङ्गीकर्त्तव्यं यत्, जीवस्य बद्धावस्था न अनादिः। जीवात्मा एकदा मुक्त एव आसीत्, ततः बद्धोऽभवत्। अन्यथा एतद् विस्मृतितत्त्वं

नोपपद्यते, यतः पूर्वज्ञातविषयस्य एव विस्मरणं सम्भवेत्, न तु अज्ञातस्य, पुनः अनादिविस्मृतस्य ज्ञातत्वं कथं स्वीकुर्यात्? अतः अद्वैतमतानुसारेण बन्धनमोक्षयोः क्रमपर्यायः स्वीकर्त्तव्यः। अस्यार्थः मुक्त एव बध्यते, पुनः बद्ध एव मुच्यते इति। द्वैताद्वैतमते तु जीवस्य ब्रह्मभावो न विस्मृतः अपि तु आवृत एव[60]। मोक्षे तु तदावरणनाशः, अतः स्वस्वरूपवाप्तिः भगवद्भावापत्तिश्चेति। भगवद्भावस्य सर्व्वव्यापकत्वाप्रसङ्गात् देशान्तरगमनेन तत्प्राप्तौ अनुपपत्तिर्नास्ति, इति शिवम्॥

## तथ्यसूत्राणि

1. छान्दोग्योपनिषत् • (६।८।६)
2. अध्यास(परपक्ष)गिरिवज्रम्, कलिकाता-संस्करणम् • (पृष्ठम् – ८९०
3. प्रश्नोपनिषत् • (३।९)
4. ब्रह्मसूत्रम्, वेदान्त-वेदान्तकौस्तुभ • (४।२।१)
5. छान्दोग्योपनिषत् • (६।८।६)
6. “प्राणो जीवेन संयुज्यते। … … … जीवसंयुक्तस्य प्राणस्य तेजसि सम्पत्तिरिति फलितार्थः।”
   – ब्रह्मसूत्रम्, वेदान्तपारिजात्सौरभ-भाष्यम् • (४।२।४)
7. बृहदारण्यकोपनिषत् • (४।४।२)
8. बृहदारण्यकोपनिषत् • (४।३।३८)
9. तदेव, शाङ्करभाष्यम्।
10. कठोपनिषत् • (२।३।१४)
11. छान्दोग्योपनिषत् • (८।६।५)
12. बृहदारण्यकोपनिषत् • (४।४।२)
13. छान्दोग्योपनिषत् • (८।६।६)
14. कठोपनिषत् • (२।३।१४,१५)
15. तदेव, • (२।३।१६)
16. ब्रह्मसूत्रम् • (४।२।७)
17. छान्दोग्योपनिषत् • (६।१४।२)
18. प्रश्नोपनिषत् • (६।५)
19. मुण्डकोपनिषत् • (३।२।६)
20. तदेव, शाङ्करभाष्यम्
21. महानारायणोपनिषत् • (२५।१)

22. ब्रह्मसूत्रम् • (४।२।१९)
23. श्रीमद्भगवद्गीता • (८।२६)
24. ब्रह्मसूत्रम्, वेदान्त-वेदान्तकौस्तुभ • (४।२।१९)
25. ब्रह्मसूत्रम्, वेदान्त-वेदान्तकौस्तुभ • (४।२।२०)
26. तदेव
27. बृहदारण्यकोपनिषत् • (६।२।१५)
28. कूर्म पुराण, पूर्वार्धम् • (१२।२६९)
29. अध्यास(परपक्ष)गिरिवज्रम्, कलिकाता-संस्करणम् • (पृष्ठम् – ९०५)
30. ब्रह्मसूत्रम् • (४।३।११)
31. तदेव • (४।३।१२)
32. महाभारतम्, द्रोणपर्व्वम्।
33. वेदान्तकौस्तुभविधृता श्रुतिः, ब्रह्मसूत्रम् • (४।३।११)
34. छान्दोग्योपनिषत् • ८।१४।१)
35. तदेव,
36. छान्दोग्योपनिषत् • (८।१३।१)
37. बृहदारण्यकोपनिषत् • (६।२।१५)
3[8]. द्रष्टव्यम् : अध्यास(परपक्ष)गिरिवज्रम्, कलिकाता-संस्करणम् • ( पृष्ठम् – ९०७ )
39. शाङ्करभाष्यम्, छान्दोग्योपनिषत् • (२।२०।२), बृहदारण्यकोपनिषत् • ( १।३।२२, १।५।२३ )
40. अध्यास(परपक्ष)गिरिवज्रम्, कलिकाता-संस्करणम् • (पृष्ठम् – ९०८)
41. "नापि सगुणविद्यायामेव श्रुता अपि तु निर्गुणायाम्, तथा च श्रुतिमुखेनैव सिद्धा विदुषां गतिरिति।"
    अध्यास(परपक्ष)गिरिवज्रम्, कलिकाता-संस्करणम् • (पृष्ठम् – ९०९)
42. ब्रह्मसूत्रम् • (३।३।३०,३१)
43. ब्रह्मसूत्रम् , शाङ्करभाष्यम् • ( ३।३।३१ )
44. "उपासनाया ………………ज्ञानरूपत्वात्", -- ब्रह्मसूत्रम्, अणुभाष्यम् • (१।१।१ )
45. "जीवस्य सर्व्वात्मना ब्रह्मभेद … … … नास्ति" -- ब्रह्मसूत्रम्, अणुभाष्यम्, भाष्यप्रकाशः।
    "मुक्तिदशायामपि साम्यमात्रबोधनाच्च, जीवब्रह्मैक्यस्यापि तादात्म्यरूपत्वम् एव न तु सर्वात्मना अभेदरूपत्वम्, अभेदस्य तादात्म्यात्मकत्वात्" (तदेव १३६१-१३६३ पृ.)
46. ब्रह्मसूत्रम्, अणुभाष्यम् • (४।२।१)
47. ब्रह्मसूत्रम्, अणुभाष्यम् • (४।३।७)
48. ब्रह्मसूत्रम्, अणुभाष्यम् • (४।४।१)
49. कठोपनिषत् • (२।३।५)
50. ब्रह्मसूत्रम् • (४।३।१४)

51. छान्दोग्योपनिषत् • (८।३।४)
52. छान्दोग्योपनिषत् • (५।१०।१)
53. ब्रह्मसूत्रम्, वेदान्त-वेदान्तकौस्तुभ • (४।३।१४)
54. छान्दोग्योपनिषत् • (३।१४।१)
55. वेदान्तकौस्तुभविधृता श्रुतिः, ब्रह्मसूत्रम् • (४।३।१४)
56. "परब्रह्मात्मकतया प्रकृतिवियुक्तप्रत्यगात्मक्रतुस्तादृशस्वस्वरूपप्राप्तिपूर्वकपरमात्मानं प्रतिपद्यते"
 - ब्रह्मसूत्रम्, वेदान्तकौस्तुभ-भाष्यम् • (४।३।१४)
57. छान्दोग्योपनिषत् • (७।१।५)
58. अध्यास(परपक्ष)गिरिवज्रम्, कलिकाता-संस्करणम् • (पृष्ठम् – ९११)
59. अध्यास(परपक्ष)गिरिवज्रम्, कलिकाता-संस्करणम् • (पृष्ठम् – ९१२)
60. "अनादि माया परियुक्तरूपां" - वेदान्तकामधेनुः • २

## सहायक-ग्रन्थसूची: -

1. आचार्यमाधवमुकुन्द। अध्यासगिरिवज्रम् ( वज्रोत्तेजिकायुतम् )। सम्पादक • श्रीअमोलकरामजी शास्त्री। निम्बार्कमहासभा। वृन्दावन। विक्रम सं. १९९३॥

2. पं. भगीरथ झा मैथिल। द्वैताद्वैतविवेकः। अ.भा. श्रीनिम्बार्काचार्यपीठ। सालेमावाद, आज्मेर। वि.सं. २०६५॥

3. श्री अमोलकराम शास्त्री (सम्पादक)। बृहदारण्यश्वेताश्वेतरोपनिषदौ (उपनिषत्प्रकाशिकाटीकासहितः)। प्रकाशक • श्री१०८ निम्बार्क महासभा। वृन्दावन॥

4. ड. रमा चौधुरी। डक्ट्रिन् अफ् निम्बार्क एन्ड् हिज् फलोवार्स्। रयाल् एसियाटिक् सोसाय्टि। कलिकाता। १९४१॥

5. श्रीमन्निम्बार्काचार्यः। मन्तत्ररहस्यषोडशी। (श्रीमत्सुन्दरभट्टजीकृता मन्त्रार्थरहस्यटीका सहिता)। सुखचर काठीयावावार आश्रम। सुखचर। २००८॥

6. श्रीमन्निम्बार्काचार्य। वेदान्तकामधेनुः (दशश्लोकी)। अनुवाद • श्रीश्री १०८ स्वामी धनञ्जयदासजी। कलिकाता।१९९०॥

# योगरहस्यानुसारं गर्भिण्याः कृते योगाभ्यासः

**मलयमजुमदारः**
अनुसन्धाता - सांख्ययोगविभागः
राष्ट्रियसंस्कृतविश्वविद्यालय (तिरुपतिः)

## पुरोवाक् (Introduction)

स्त्रीपुरूषयोस्संयोगेनैवास्मदीयसमाजोऽयं संरचितः। द्वावुभयोस्स्वास्थ्ययोः जगतमिदम् सुस्वास्थ्यत्वमिति प्रतीयते। स्त्रीयस्तु समाजेऽस्मिनत्यन्तं महत्त्वपूर्णां बहुमुखीं च भूमिकां निर्वहन्ति। यत्र स्त्रियो दूर्वलतां प्राप्नुवन्ति तत्रैवाधोगच्छन्त्यपि पुरूषा निसन्दिग्धमेवेषो नियमः। ताश्च स्त्रियः कदाचिन्माता-पत्नी-भगिनी-दुहितास्वरूपेभ्यस्स्वकार्यं कुर्वन्त्योऽग्रेसरन्ति। **"मातृदेव भव"**[1] इत्युपनिषदमन्त्रात् ज्ञायतेऽऽवैदिकालादेव मातृवत् पूज्यास्स्त्रियः। निःसन्देहेन मातृरूपेणैव नारी विश्वं संरक्षति। तैरेवऽन्नं वस्त्रं धान्यं वासस्थानञ्च कल्प्यन्ते। भगवत्मनुवचनं स्मर्य्यते –

**"यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।**
**यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः।।"**[2]

आधुनिककाले नारीणामनादराधिक्येनोपैत्यक्षिवर्त्मेव। पितरौ सुपुष्टौ सुस्वास्थ्यौ भवतस्तस्मादेव सन्ततिमपि सुस्वास्थ्याधिकारणो भवन्तीत्यत्र नास्ति सन्देहस्यावकाशः। मातृत्वं स्त्रीणां कृते भगवत्प्रदत्तो महावर इति मेर्मतिः। मातृत्वाख्यो नाम्ना स्त्रीणां पुनर्जन्म भवति। अस्मिन्नेव काले स्त्रियस्त्यागधैर्यपरिश्र- मसहनशीलतायाश्च पाठं शेशिक्ष्यन्ते। एन.चुनीलालमहोदयस्य मतानुसारं - "Motherhood is one of the most immense and life-changing event that can occur in a women's life. When you give birth, you create life, that of your child, and your own as a mother. You start an epic journey of self-discovery and growth that can transform your entire sense of self and identity, not just now, but throughout the rest of your life."[3] इति। अतः गर्भिण्यास्सुस्वास्थ्यत्वेऽस्माभिर्यत्नो विधेयोऽपेक्षितर्वेति। यथा कृमिकीटादिनायुक्ते क्षेत्रे बीजवपनं निर्थकमिति तस्मात् नारीशरीरं स्वस्थं भवेदिति। यतोहि पुंवीजं परिपालने क्षेत्ररूपमिदं स्त्रीशरीरम्।

तदुक्तम्-

**तदेव क्षेत्रमित्याहुः पुंबीज परिपालकम्।**
**क्रिमिकीटादिनोपेते क्षेत्रे बीजं निर्थकम्।।**[4]

नाथमुनिप्रणीतयोगरहस्यानुसारं गर्भकालीनसमये स्वास्थ्यसंरक्षणाय गर्भवतीनां कृते योगभ्यासस्योपादेय- ता का किञ्च कीदृशोऽभ्यासस्तकृतेऽपेक्षितेत्येतद्विषयमाश्रित्य शोधप्रबन्धोऽयं मया विलिख्यते।

**गर्भिण्याः कृते योगोभ्यासः(Yoga for pregnant woman)**

प्राचीनकालादारभ्येदानींकालयावद्योगानुष्ठानस्योत्कर्षधाराऽधिविश्वं प्रचलिताऽस्ति। योगसूत्राकारः पतञ्जलिस्समाजस्यास्य सर्वविधस्समस्यामवलोक्य मनुष्यानां कृतेष्टाङ्गयोग उपदिष्टः। परन्तु पतञ्जलिस्त्रीभ्यस्स्वातन्त्रतया योगभ्यासो नोपदिष्टः। परन्त्वतिहासपुराणेतरयोगादिशास्त्रमधीत्याऽवगम्यते यत् तस्मिन्नपि काले नारीणां कृतेऽपि बहुविद्योपदिष्टास्ताष्वन्यतमेयं योगविद्या। योगरहस्यग्रन्थे सुस्पष्टतया गर्भवतीनां कृते योगस्योपादेयता प्रतिपादिता नाथमुनिना। तदुक्तम्-

**अधिकारो विशेषेण स्त्रीणां पुंभ्यो निगद्यते।**
**सन्तानतरू विस्तारे स्त्रीशरीरम् हि कारणम्।।**
**यथा तद्वत् रूजाक्रान्तं स्त्रीशरीरं निरर्थकम्।**
**तस्मात् लोके स्त्रियः सर्वाः विशेषेणाधिकारिणः।।**[5]

योगरहस्यग्रन्थस्यादौ प्रतिपादितमस्ति यत् याज्ञवल्यक्यस्य भार्यया गार्ग्या गर्भिणीनां कृते योगासनमा- विष्कृतमिति । योगरहस्यकारेण प्रोक्तम् –

**प्रतिक्रियायुतं द्वन्द्वपीठं सर्वबलप्रदम्।**
**गर्भिणीनान्दुर्बलानामिति गार्गी जगाद नु।।**[6]

गर्भधारणे स्वजनास्सुखिनो भवन्तीत्यत्र नास्ति सन्देहस्यावकाशः। परन्त्वस्मिन्नेव समये गर्भवतीनां शरीरमनसोः विविधानि परिवर्तनानि परिलक्ष्यन्ते। येभ्यश्शारीरिकमानसिकञ्चाशौथिल्यमुत्पद्यते। तत्प्रभावेनऽनागतशिशुमातरावुभौ ग्रस्तौ भवतः। योगाभ्यासो गर्भावस्थायां शरीरमनसी स्वस्थौ संस्थापयितुं सहायको भवति।

अयञ्चयोगाभ्यासो यथाशक्ति गर्भवतीनां समभ्यसनीयः। गर्भिण्यानां कृते योगाभ्यासस्यावश्यकता का कानिचिन्मयाऽऽलोच्यते।

१. मनरोगप्रशमने सहायको भवति।

२. मधुमोहरोगं नाशयति।

३. शिरवेदनां निवारयति।

४. अकालप्रसवभयं ह्रासयति।

५. कटिप्रदेशस्य वेदनां न्यूनीकरोति।

६. निद्रायाः गुणवत्तां संवर्धयति।

७. रक्तचापनियन्त्रणे साहाय्यं करोति।

८. सुखप्रसवाय सहायो भवति।

९. क्लान्ति-कम्प-स्वेदस्रावदयो नियन्त्रयन्ति।

१०. प्रसूत्यत्तरं मातुश्शरीरविकासश्शीघ्रं भवति।

**आसनम्(Asana)**

गर्भावस्थायामासनमिदं गर्भिण्याः मासानुक्रमेण निर्दिष्टमस्ति। समुचितसमययुचितेन प्रयत्नेनायमभ्यासो विधीयते। दण्डासनं पद्मासनं भरद्वाजासनं वीरासनं बज्रासनं ताडासनञ्चेति यस्मिन् कस्मिन्नपिकाले समभ्यसनीयम्। गर्भवतीनां कृतेऽस्यासनस्य विवरणं प्रदीयते -

**"दण्डपद्मभरद्वाजवीरवज्रसमानि तु।**
**आसनानि सदाकुर्यात् सुदीर्घै रेचकपूरकैः।।"**[7]

त्रैमासकालयावत् गर्भिण्याः कृते निर्दिष्टान्यासनानि ताडासनवृक्षासनशवासनोत्तानासनबालासनादीनि। षण्मासिककालयावत्ताडासन-वृक्षासन-वीरभद्रासन-त्रिकोनासन-प्रसारितोपादोत्तानासनमित्यादीनि आच- रितव्यानि। नवमासादारभ्य प्रसवकालपर्यन्तं समभ्यासनियान्यासनाननि ताडासन-तीक्ष्मकोणासन-अर्धपार्श्वकोणासनादीनि। परन्तु गर्भिण्याः कृते नूनमेव नैकासन-चक्रासन-अर्धमत्सेन्द्रासन-भुजङ्गासन-हलाशन-शलबासनाख्यन्यासनानि प्रतिषिद्धानि। योगरहस्यानुसारं गर्भिण्याः कृते कानिचन आसनानि तल्लाभाश्च प्रतिपाद्यन्ते।

**पद्मासनम्**

आदौ वामोरूपरि दक्षिणचरणं संस्थाप्य दक्षिणोरूपरि वामपादं संस्थापयेत्। तदनन्तरं विपरीतहस्ताभ्यां पादद्वयस्य वृद्धाङ्गुष्ठद्वयं पृष्टभागात् धृत्वा चिवुकं हृदये निधाय नासिकाग्रभागं अवलोकयेत्। तदस्ति -

**वामोरूपरि दक्षिणं च चरणं स्स्थाप्य वामं तथा,**
**दक्षोरूपरि पश्चिमेन विधिना धृत्वा कराभ्यां द्दढम्।**
**अङ्गुष्ठौ हृदये निधाय चिबुकं नासाग्रमालोकयेद्,**
**एतद् व्याधिविनाशकारि यमिनां पद्मासनं प्रोच्यते।।**[8]

पद्मासनं गर्भिणीनां शारीरिकं मानसिकञ्च स्थिरतां तथा शान्तिं प्रददाति। ऋतुस्रावस्य जटिलतां न्यूनीकरोति। किञ्च गर्भवतीनां उपवेशनशक्तिवर्धनायास्याभ्यासो विधेयः।

**वीरासनम्**

वीरासनस्य विधिविषये हठयोगप्रदीपिकाकारेणोक्तम् यत् दक्षिणपादं वामरूपरि संस्थाप्य वामपादं दक्षिणोरूपरि संस्थापयेद्। तदुक्तम् हठयोगकारेण –

**एकं पादं तथैकस्मिन् विन्यसेदूरूणि स्थितम्।**
**इतरस्मिंस्तथा चोरूं वीरासनमितीरितम्।।**[9]

आसमनिदं गर्भिण्याः पाचनशक्तिं समीकरोति। किञ्च उरूभागस्य वलवर्धनं अनेनैवासनेन सम्भवति। अम्लता-मधुमेह-उच्चरक्तचाप इत्यादिनां समस्यानां निवारणे सहायको भवति।

**वज्रासनम्**

भोजनादनन्तरं आसनमिदं कर्तव्यम्। वज्रवत् उरूद्वयं सुदृढं कृत्वा गुदापार्शे उभौ पादौ संस्थाप्य अस्य अभ्यासः करणीयः। तथा प्रोक्तम् घेरण्डसंहितायाम् –

**जङ्घाभ्यां वज्रवत्कृत्वा गुदापार्श्वे पदावुभौ।**
**वज्रासनं भवेदेतद्योगिनां सिद्धिदायकम्।।**[10]

वज्रासनाभ्यासमानानां गर्भवतीनां गर्भाशये रक्तस्रावः प्रवर्धते, येन शिशुविकासोऽपि अभिवर्धते। गर्भावस्थायामुत्पन्नं वायुजनितसमस्यां अम्लताञ्च दूरीकरोति। कटिप्रदेशे उदरभागे च विद्यामानानां सर्वेषां पेशिनां स्नायुनाञ्च कुशलप्रवृत्तिर्भवति जठरानलञ्च संवर्धयति।

**पश्चिमोत्तासनम्**

पश्चिम इति शब्देन पृष्टभागो बोध्यते। पृष्टभागं विशेषरूपेण आकृष्य क्रियमाणमासनम् पश्चिमोत्तासन मित्यनेन ज्ञायते। अस्य विधिविषये हठयोगप्रदीपिकायामुक्तमस्ति स्वपादौ पृथिव्यां प्रसार्य हस्तद्वयेन पादद्वयस्याग्रभागं संस्पर्श्य जानुरूभयोः मध्ये ललाटं संस्थापयेत्। तथैवोक्तम् –

**प्रसार्य पादौ भुवि दण्डरूपौ दोर्भ्यां पदाग्रद्वितयं गृहीत्वा।**
**जानूपरिन्यस्तललाटदेशो वसेद् इदं पश्चिमतानमाहुः।।**[11]

गर्भवत्या पश्चिमोत्तासनस्य नियमिताभ्यासेन मनः प्रशान्तं भवति। पाचनशक्तिं वर्धनाय अस्याभ्यासः कर्तव्यः। उदरस्य नितम्बप्रदेशस्य मेदस्तदभ्यासेनैव दूरीभवति। उच्चरक्तचापस्य अनिद्रायाः च प्रशमने सहाय्यं करोति।

**शवासनम्**

मृतकस्य शववत् भूमौ उत्तानं शयनं वा शवासनमिति। शवासनं योगनिद्राप्युच्यते। शवाससनमिदं श्रमनाशकारकं मानसिकविश्रान्तिप्रदायकं चेति। तदेव प्रोक्तम् –

**उत्तानं शववद् भूमौ शयनं तत् शवासनम्।**

**एतत् शान्तिकरं पुंसां चित्तविश्रान्तिकारकम्।।**[12]

गर्भिणीनां रक्तप्रवाहसमतौल्यं करोति शरीरञ्च विश्रान्तिं प्रददाति। शवासनं तन्त्रिकातन्त्रं प्रशम्य अधिशरीरं समता प्रवर्धयति।

**प्राणायामः(Pranayama)**

पतञ्जलिप्रणीतयोगदर्शने प्राणायामो चतुर्थयोगाङ्गत्वेनोल्लिखितः[13] इति। गर्भिण्याः मानसिकस्थ्यसंरक्षणाय प्रामायामस्यानुष्ठानं नूनमेव अपेक्ष्यते। प्राणायाममहत्त्वं मनुस्मितौ[14] उक्तमस्ति यत् प्राणायामात् देहेन्द्रियाणां दोषाः विनश्यन्ति। हठयोगप्रदीपिकाकारेण तत्प्रयोजनं सूच्यते[15] इति। गीतायामपि[16] भगवता श्रीकृष्णेनापि तत्फलं वर्णितम्। योगरहस्ये आपञ्चम्यमासकालपर्यन्तं गर्भवतीनां कृते केचन प्राणायामाः मासानुक्रमेण निर्दिश्यन्ते -

**अतीते पञ्चमे मासि शीतलीनाडिशोधकौ।**

**प्रशस्तौ गर्भिणीनां हि कदाचित् सूर्यभेदनः।।**[17]

एतद् व्यतिरिच्य तैमासपर्यन्तं भ्रामरी, नवमकालयावत् उज्जायीप्राणायामाभ्यासस्य विधानमस्ति। गर्भिण्यीभ्यः केचन प्रणायामास्तल्लाभाश्च आलोच्यन्ते मया।

**सूर्यभेदनप्राणायामः** कुम्भकप्राणायामेष्वैवास्यान्तर्भावः। उदरस्थरोगनिवारणेऽस्याभ्यासः करणीयः। अशितिप्रकारकाः वायुविकारभूतरोगानां कृमिनाञ्च नाशक एषः प्राणायामः।[18]

**शीतलीप्रणायामः** अष्टौकुम्भकप्राणायामेषु शीतलीप्रणायामोऽन्यतमः। जिह्वया वायुमाकृष्य काकचञ्चुवत् पूरयेदित्येषा प्रक्रिया हठयोगप्रदीपिकायामुक्तमस्ति।[19] उच्चरक्तचापस्तथा च पित्तकफगतरोगाः झटिति दूरीभूता भवन्ति।

**उज्जायीप्राणायामः** अस्यविधिविषये कथितमस्ति[20] वक्त्रं संयम्येडापिङ्गलानाडीभ्यां शनैः वायुमाकृष्य हृदयकण्ठदेशयोः सध्वनिं पूरयेत्।

गर्भिण्याः कण्ठदेशस्थितः कफजन्यदोषः ह्रासते पचनशक्तिश्च वर्धते।[21] निद्राजनितसमस्यां निवारयति।

**भ्रामरीप्राणायामः** भ्रमरसदृश्शब्दो भवतीतीत्यस्मात्कारणादेवास्य नाम भ्रामरीप्राणायामः। वेगपूर्वकतया भ्रमरनादसदृशतया सशब्देन पूरकप्राणायामस्य पश्चादेव रेचकप्राणायामः कुर्यात्। अस्याभ्यासेन गर्भवतीनां मनस्सदा प्रफुल्लितं जायते।[22]

**बन्धः (Bandha)**

महिलानां कृते योगसाधनायां बन्धस्योपयोगिता समुल्लेखनीया। बन्धं विना प्रणायामाभ्यासः फलप्रदो नैव भवति। स्त्रीणां रजकोशोऽनेनैव बन्धाभ्यासेन परिशुद्धति। तदुक्तम् योगरहस्यकारेण -

**बन्धादस्मान्नस्खलेच्च वीर्यं नृणां कदापि हि।**
**स्त्रीणां रजोविशुद्धिश्च जायते न हि संशयः।।**[23]

उड्डीयानमूलजालन्धरबन्धख्या ग्रन्थाकारबन्धत्रयस्स्वीकृतस्तद्ग्रन्थे। तद्भणितम् –

**उड्डीयानो मूलबन्धः जालंधर इति त्रिधा।**
**बन्धा मुख्याः प्राणवृत्ति निरोधे सहकारिणः।।**[24]

बन्धत्रयेष्वतेषु जालंधरबन्धस्य महत्वं सर्वोत्कृष्टमिति प्रतिपादितम्। यतोहि गर्भिण्याश्शरीरेऽपानवायोः समताऽऽनेनैव बन्धाभ्यासेन तिष्ठति। परन्तु उड्डीयानमूलबन्धौ गर्भिणीनां अन्त्रविकारस्वल्पनिद्रामुत्र विकारजनितसमस्यायाः कारणं भवितुमर्हति। अतस्तयोऽभ्यासे प्रनिषिद्धति ग्रन्थाकारः।

**मिताहारः (Yogic diet)**

**योगाभ्यासे तु सर्वेषां शुद्धाशुद्धान्नभोजनम्।**
**सम्प्रदायस्सदाचारस्सत्सेवा सुमनस्कता।।**[25]

योगशास्त्रानुसारं सात्त्विकराजसिकतामसिकभेदेभ्य आहारस्त्रिविधोऽस्ति। भोज्यद्रव्यान्येतानि गर्भिणीनां शारीरिकमानसिकस्वास्थ्योऽत्यावश्यकीयां भूमिकां सम्पादयन्ति। राजसिकतामसिकाहारं व्यतिरिच्य सात्त्विकाहारजेमनेन मनसि प्रसन्नता ऊर्जा चाधिवर्ध्यन्ते।[26]

शुद्धस्सुगन्धितमधुरचतुरार्थविवर्जिता- हारस्सात्त्विकमिताहारत्वेनैवाभिधीयते। हठयोगप्रदीपिकाकारेण मिताहारलक्षणं प्रपञ्चितम् –

**सुस्निग्धमधुराहारः चतुर्थांशविवर्जितः।**

**भुज्यते शिवसम्प्रीत्यै मिताहारः स उच्यते।।**[27]

आधुनिकचिकात्साविज्ञानानुसारं गर्भिणीनां कृते आहारपदार्था अधोलिखितास्सन्ति।

१. **शाकाः(Vegetables)** -
   सर्वहरितपत्रम्,मृञ्जनकम्,निष्पावः,रक्तफलम्,उर्वारूकम्,पालङ्कश्चेत्यादयः।
२. **अङ्कुरः (Sprouts) –** अन्नम्,पिष्टम्,यवागुः,भृष्टश्चेत्यादयः।
३. **फलम् (Fruits) –** सेव-नारङ्ग-कदलि-आम्र-द्राक्षा-दाडिम-मधुकर्कटी-आनानसादीनि।
४. **शुष्कफलम् (Dry fruits) –** काजव-किशमिश-वाताद-अक्षोट-दिनाङ्कादीनि।
५. **Micronutrients & Antioxidants –** Calcium, Iron, Copper, Iodine, potassium
   Vitamins – ABDCEK etc.

**प्रतिषिद्धकर्माणि(Avoidable work)**

गर्भिण्यास्सुचेतसा स्वकार्यं सम्पादनीयम्। अन्यथा मातृणामप्रणिधानेन गर्भस्थशिशुः विकारग्रस्त सन् नानाविधसमस्यायास्सम्मुखीनो भवति। अतस्तस्मात् गर्भवतीमहिलानां कृते वर्जनियानि कर्माणि उपदेदिश्यते नाथमुनिस्स्वकीययोगरहस्यग्रन्थे –

**वेगेनधावनंनाट्यमुच्चैर्घोषान् परित्यजेत्।**

**गर्भपातो विकारश्च शिशोस्स्यान्नैव संशयः।।**[28]

द्रुतधावनम्, नाट्यम्,उच्चैः वार्तालापम् चेत्यादीनि कर्माणि गर्भिण्या सदैव संत्यजनीयानि। इतोऽपि मादकद्रव्यसेवनधुम्रपानात्याधिकभारवहनादीनि कर्मण्यापि वैद्यैः प्रतिषिध्यन्ते।

## निष्कर्षः (Conclusion)

उत्तमकार्यसम्पादनार्थं सुस्वास्थ्यमत्यावश्यकम्, विशेषतः गर्भिण्यास्सुस्वास्थ्यत्वमिति। यतोहि राष्ट्रस्य भविष्यप्रजन्म तासुरेव स्त्रीषु समाश्रितमस्ति। आयुर्वेदाचार्येण चरकेणोक्तम् –

**स्त्रीषु प्रीतिर्विशेषेण स्त्रीष्वपत्यं प्रतिष्ठितम्।**
**धर्मार्थौ स्त्रीषु लक्ष्मीश्च लोकाः प्रतिष्ठिताः।।**[29]

परमसन्तापस्य विषयोऽयं अधुनाप्यस्मदीयदेशे मातृमृत्युहारं प्रतिदिनं वर्धते। सम्प्रति देशेऽस्मिन् प्रतिसहस्त्रशिशुषु सप्तविंशतिसंख्याकाश्शिशवो जन्मकालैव मृत्युं प्राप्नुवन्ति। स्वस्थमातेव स्वस्थसन्तानस्य जननी भवितुमर्हति। परन्तु कदाचित् मातुः परिवारस्य चानावधानतया गर्भिणी सम्पीडिता सत्यनेक-रोगाक्रान्तो भवति तत्प्रभावानागतसन्तानयपेति। समुचितसमये उचितप्रयत्नेन कृतयोगभ्यासो गर्भिण्यास्सुखप्रसभलाभार्थं शारीरिकमानसिकव्याधिनामुपशमनार्थं महदुपकारक इति। नाथमुनिस्तदग्रन्थे सकुशलतापूर्वकं गर्भिण्याः कृते योगभ्यासस्य महत्त्वं प्रदर्शितम्। यच्चाधुनास्मिन् कालेऽपि गर्भिणी स्वजीवने प्रयोगपूरस्सरं सुस्थस्सुवलञ्च सन्तानं प्रसवयितुं समर्था भवतीति भगवन्तं संप्रार्थये विस्तरात्।

## सन्दर्भाः

1. स्वामी गम्भीरानन्दः(सम्पादकः)(२०१७),उपनिषद्ग्रन्थावली,उद्बोधन कार्यालयः,कलकाता,पृ- २८०.
2. रूस्तगी,डाँ उर्मिला,(सम्पादकः)(२००५),मनुस्मृतिः,जे.पी.पब्लिकेशन हाउस,दिल्ली,श्लोकः,३-५६.
3. Chunilal N, (Author, 2015), Rupa publications India, The mindful mother, page-1
4. देशिकाचारः टि के भि(अनुवादकः)(२०१०),योगरहस्यम्,कृष्णमाचार्य योग मन्दिरम्,चेन्नाइ,श्लोकः,१-१५.
5. तत्रैव, १-१४,१६
6. तत्रैव, ३-१९
7. तत्रैव, ३-१०
8. श्रद्वारिकादासशास्त्री स्वामी,(सम्पादकः)(२०१९),हठयोगप्रदीपिका,चौखम्बा सुरभारती प्रकाशन,दरियागंज,नइ दिल्ली, श्लोकः, १-४४.
9. तत्रैव, १-२१
10. सरस्वती स्वामी निरञ्जनानन्दः(सम्पादकः)(२०११),घेरण्डसंहिता,योग पब्लिकेशन ट्रस्ट,मुंगेर,विहार,श्लोकः,२-१३

11. तत्रैव, हठयोगप्रदीपिका, १-२८

12 तत्रैव, १-३२

13. शास्त्री, प्रो० ज्ञानप्रकाशः, भरद्वाजः, प्रो० ईश्वरः (सम्पादकः)(२०१६),महर्षिपतञ्जलिकृतयोगसूत्र,आदिनाथ प्रिँट प्रोसेस,दिल्ली,सूत्रम्,२-२९."यम-नियमासन-प्राणायाम-प्रत्याहार-धारणा-ध्यानसमाधयोऽष्टावङ्गानि।"

14. तत्रैव, मनुस्मृतिः,६-७१

15. तत्रैव, हठयोगप्रदीपिका "चले वाते चलं चित्तं निश्चले निश्चलं भवेत्। योगी स्थाणुत्वमाप्नोति ततो वायुं निरोधयेत्।।" "यावद् वायुः स्थितो देहे तावज्जीवनमुच्यते। मरणं तस्य निष्क्रान्तिस्ततो वायुं निरोधयेत्।।" श्लोकः, २.२-३.

16. श्रीमद्भगवद्गीता "अपाने जुह्वति प्राणं प्राणेऽपाणं तथापरे......सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः।" ४.२९-३०

17. तत्रैव, योगरहस्यम्, श्लोकः,३-१६

18. तत्रैव, हठयोगप्रदीपिका "कपालशोधनं वातदोषघ्नं कृमिदोषहृत्।" श्लोकः, २.५०

19. तत्रैव "जिह्वया वायुमाकृष्य पूर्ववत् कुम्भसाधनम्। श्लोकः, २-५७

20. तत्रैव "मुखं संयम्य नाडीभ्यामाकृष्य पवनं शनैः। यथा लगति कण्ठात्तु हृदयावधि सस्वनम्।।" श्लोकः- २.५१

21. तत्रैव "पूर्ववत् कुम्भयेत् प्राणम्, रेचयेदिडया ततः। श्लेष्मदोषहरं कण्ठे देहानलविवर्धनम्।।" श्लोकः, २-५२

22. तत्रैव "वेगाद् घोषं पूरकं भृङ्गनादं भृङ्गीनादं रेचकं मन्दमन्दम्। .... काचिदानन्दलीला।।"श्लोकः, २-६८

23. तत्रैव, योगरहस्यम्, श्लोकः, १-८०

24. तत्रैव, १-६०

25.तत्रैव, ३-२८

26. तत्रैव, "ततो मितं हि भुञ्चित युक्तकाले स्मरन् हरिम्। तेन सर्वे विप्लवास्सुदर्ग्धादावाद्याथावनम्।।" श्लोकः, ३-७.

27. तत्रैव, हठयोगप्रदीपिका, २-४८

28. तत्रैव, योगरहस्यम्, ३-१२

29. चरकसंहिता चिकित्सास्थानम् २ प्र.

# रामायणे वर्णितं राजनीतितत्त्वम्

**Dr. Chinmoy Chattopadhyay**
Associate Professor
A.M. College, Jhalda,

## भूमिका:-

देशभक्तिः, राष्ट्रप्रगतिः, च राष्ट्रवादस्यविकासः साहित्येन सम्भवः अस्ति। संस्कृतसाहित्य भारतस्य साहित्यिकचिन्तनस्य पूर्णाभिव्यक्तिः अस्ति। वेदात् आरभ्यः पुराणपर्यन्तं अपि राष्ट्रवादस्य भावः प्रकटितः अस्ति। प्राचीनभारतस्य राजतन्त्रस्य व्यवस्था ईदृशी आसीत् यत् राष्ट्रस्यकृते नृपनिवाचनं प्रजावृन्दस्य ऊपरि आसीत्। यदि एतत् न स्यात् तर्हि रामायणे मार्कण्डेयवामदेवकश्यपादिऋषिभिः भगवान् वशिष्ठं प्रधानपदे न नियुक्तं स्यात्। रामायणस्य अयमेव वैशिष्ट्यं माम् आकर्षयन्ति।

रामायणस्य अयोध्याकाण्डस्य शतमे अध्याये श्री रामचन्द्रः भरताय राजनीतिं विस्तरेण उपदिशति। यस्मिन् काले श्रीरामचन्द्रः चित्रकूटपर्वते निवसति स्म, तस्मिन् काले भरतः स्वमन्त्रिभिः सह श्रीरामचन्द्रस्य प्रीतिं कर्तुं चित्रकूटम् आगतवान्। स्वकल्याणविषये पृष्टवा श्रीरामः भारतजी इत्यस्मै राजनीतिविषये किञ्चित् उपदेशं दत्तवान्। यत् अद्यत्वे अपि अस्माकं कृते उपयोगी सिद्धं भवितुम् अर्हति। श्री रामः कथयति- भारत! धनुर्वेदविशेषज्ञः राजनैतिकविशेषज्ञः उपाध्याय सुधन्वा प्रति पूर्णं सम्मानं दर्शयन्ति वा? किं भवता विशुद्धवंशजन्मनि शूर-जितेन्द्रिया इत्यादयः जनाः इशारेण हृदयस्य भावाः ज्ञाताः, भवद्भिः सदृशाः विचाराः च मन्त्रिपदे नियुक्ताः? सत्परामर्शः एव राजानां विजयस्य कारणम्। किं त्वं यथासमये जागरिष्यसि? किं त्वं शेषरात्रौ आर्थिकलाभस्य विषये चिन्तयन् करोति वा? किं न त्वं कस्मिंश्चित् गुप्तविषये एकाकी वा अन्यैः सह वा परामर्शं करोषि । किं भवतः नियतपरामर्शः सर्वत्र प्रकाशितः न भवति? किञ्चित् परिश्रमेण अधिकं लाभप्रदं कार्यं निर्णयं कृत्वा भवन्तः तत्क्षणमेव आरभन्ते? मा विलम्बं कुरु? किं अन्ये भवतः गुप्तपरामर्शं भवतः माध्यमेन वा भवतः मन्त्रिणां माध्यमेन तर्कद्वारा वा तार्किकानुमानेन वा ज्ञातुं न शक्नुवन्ति? किं त्वं मूर्खसहस्राणि

त्यक्त्वा एकं विद्वान् स्थापयितुम् इच्छसि । यतः यदा संकटः भवति तदा तस्य संकटात् मुक्तिं प्राप्तुं विद्वान् एव महत् कल्याणं कर्तुं शक्नोति। अस्माकं मतेन श्रीरामेन भरतं प्रति यः उपदेशं दत्तः सः अद्यत्वे जनमतदानयुगे न स्वीकृतः भविष्यति। यतः मूर्खाणां मतदानमेव अद्यत्वे राष्ट्रं शासयति - एषा वर्तमानयुगस्य नीतिः।

श्री रामचन्द्रः भरतं वदति- भवतः मुख्यसेवकाः मुख्यकार्ये नियुक्ताः भवन्ति, मध्यमसेवकाः मध्यमकार्ये नियुक्ताः भवन्ति तथा सामान्यकार्य्ये सामान्यसेवकाः नियुक्ताः भवन्ति? किं भवन्तः योग्यान् जनान् अयोग्यकार्येषु, अयोग्यान् च योग्यकार्येषु न नियुक्तयन्ति? भवतः सम्पूर्णे अमत्यवर्गे कोऽपि उत्कोचं गृह्णाति वा? येषां पितरः पितामहाः इत्यादयः पूर्वजन्मभ्यः सेवकार्यं कुर्वन्ति, च येषां बाह्याभ्यन्तरभावना व्यवहारा च शुद्धा, तेषां केवलं ते महान् अमात्यगणाः भवतः सत्कार्येषु नियुक्ता सन्ति? किं ते सुतीक्ष्ण दण्डेन जनान् न पीडयन्ति? कठोरदण्डेन व्याकुलाः जनाः मन्त्रिणः च त्वां न अवज्ञां कुर्वन्ति? किं त्वया एतादृशः समर्थः, शत्रुसेनापराजयितुं समर्थः, बुद्धिमान्, बलवान्, विपत्तौ धैर्यवान्, सुकुटुम्बजन्मनः, शुद्धनीतिः, स्वामिनिष्ठाविशेषः च नियुक्तः? किं भवन्तः कुशलानाम् वीराणां च योद्धानां युद्धे कुशलप्रदर्शनस्य कृते समुचितदानेन, सम्मानादिभिः पुरस्कृत्य सम्मानं कुर्वन्ति? सैन्यकर्मचारिणां वेतनं समये एव ददति वा? किं भवन्तः वेतनं दातुं विलम्बं न कुर्वन्ति? अन्यथा अनेकानि दुर्घटनानि भवन्ति। किं राष्ट्रस्य प्रमुखः भवतः विषये रुचिं लभते? भवतः कार्यसिद्ध्यर्थं ते सर्वे सर्वात्मना च मिलित्वा कार्यं कर्तुं सज्जाः सन्ति। भवतः राज्ये निवसन्तः विद्वांसः, यथार्थवादिनः, विचारकाः, समर्थाः जनाः च भवता दूतरूपेण प्रेषिताः भवन्ति ।किं भवन्तः कार्यं कर्तुं नियुक्ताः सन्ति? इदं प्रतीयते यत् श्रीरामस्य एतेषां शिक्षानां वर्तमानपरिदृश्ये किमपि मूल्यं नास्ति।

भगवान् श्रीरामः पुनः भरतं वदति यत् हे भरत! १८ तीर्थाणि पदानि वा अन्यराष्ट्रानां (मन्त्री, पुरोहितः, युवराजः, सेनापतिः, दौवारिक, प्रासादस्य प्रमुखः, कारागारस्य प्रमुखः, कोषाध्यक्षः, कार्म-नियोजक, प्राड विवाक, वृत्तदेयकः, नगरस्य प्रमुखः, कर्मन्तिका,

राज्यसीमायाः रक्षकः, किलारक्षकः, राष्ट्रपालः, दण्डपालः, च धर्माध्यक्षः) पदेषु नियुक्तानां जनानां, भवतः पक्षस्य प्रधानमन्त्री, पुरोहितः युवराजः च भवतः गुप्तचराः स्वपरिचयं गोपनीयं कृत्वा स्वस्य च अन्यराष्ट्रस्य उपर्युक्तेषु १८ पदेषु नियुक्तानां व्यक्तिनां सम्पूर्णं समाचारं भवन्तं प्रेषयन्ति एव? श्री रामचन्द्रेण भरताय दत्वा अमूल्यशिक्षा राष्ट्रभावनाप्रबुद्धराजाय प्रति राजनीतिं प्रति प्राणस्वरूपं अस्ति।

श्रीरामः कथयति- हे भरत! कृषि- पशुपालनेन जीवनयापनं कुर्वन्तः जनाः किं भवन्तः सन्तुष्टाः सन्ति? कृषि- वाणिज्य- पशुपालनेन जनाः समृद्धाः भवन्ति वा? अस्य समग्रस्य जनसमुदायस्य रक्षणेन, कल्याणेन च, किं त्वं तान् पालयसि? यतो हि राष्ट्रस्य जनाः नृपस्य प्रतिपालयं भवति । किं भवतः हस्तिवर्गः सुरक्षितः स्वस्थः च अस्ति? किं त्वं प्रतिदिनं राज्यसभायां जनानां दर्शनं दास्यति? राष्ट्रस्य सर्वदुर्गाणां धन-धान्य शस्त्राणि च परिपूर्णासन्ति। श्रीरामः कथयति- "हे भरत! किं भवतः आयः अधिकः व्ययः न्यूनः च अस्ति? अयोग्यजनानाम् धनं दत्त्वा भवतः कोषः शून्यः न भवति वा? किं लोभात् निर्दोषाः सज्जनाः भवतः कर्मचारीभिः दण्डिताः न भवन्ति? किं भवतः कर्मचारी धनलोभात् अपराधिनः न मुञ्चन्ति? धनिक-दरिद्रयोः विवादे किं भवतः कुटुम्बजनाः धन-लोभात् धनिनः विजयं प्राप्नुयुः, निर्धनाः पराजयस्य इति नियमाः न कुर्वन्ति? यतः निर्दोषस्य अश्रुभिः राजानं नाशयितुं शक्यते। श्री रामचन्द्र :कथयति- हे भरत ! त्वं नास्तिकता, असत्यभाषणं, अनुचितं क्रोधं, प्रमादं, दीर्घ सूत्रता, ज्ञानिनः जनानां सह न सङ्गतिः, आलस्यः, कामुकलोभः, अर्थशास्त्रानमिज्ञ जनानां उपदेशं गृह्णाति, उपदेशं गोपनीयं न धारयति, शुभकार्यं न करोति, युगपत् अनेकशत्रून् एकत्रित विरोधं कृत्वा इत्यादि १४ राजदोषेभ्यः सर्वदा दूरं तिष्ठसि वा? 'हे भरत! मृगया, द्यूतं, दिवा -निद्रा, अन्येषां आलोचना, अतिमैथुनं, मद्यपानम्, नृत्यं, गायनम्, वाद्यवादनं, व्यर्थयात्रा च इत्यादीनि १० व्यसनं त्यक्तवन्तः वा? श्री रामचन्द्रः भरतं कथयति यत् ' कि त्वं जलदुर्ग, गिरिदुर्ग, वन दुर्ग, ऐरिन् दुर्ग, धान्वण दुर्ग,इत्यादीन् पूर्णतया सुरक्षितं करोषि? पुनः श्री रामचन्द्रः भरतं वदति यत् किं भवन्तः समुचितस्थाने सामं, दानं, भेदं, दण्डं च उपयुञ्जते? किम् एतानि सप्त राज्ञः ,मन्त्री ,राज्य, दुर्गं ,धनं, बलं , मित्रं च स्वस्थं धारयसि? त्वया पैशुन्यः, साहसः, द्रोहः, ईर्ष्या,

असूया , साधु –निन्दा, वाक् -पारुष्य ,निष्ठुरता च अष्टक्रोधज इत्यादीनि अष्टानि क्रुद्धानि व्यसनानि किं त्वया त्यक्ताः? किं त्वं एतान् उत्साहशक्त्या,मन्त्रशक्त्या दिव्यशक्तयोः च त्रिमूर्तिं ज्ञात्वा तेषां संस्कारं करोषि । किं भवतः त्रयी, वर्ता, दण्डनीतिः च सम्पूर्णं ज्ञानम् अस्ति ? किं त्वं स्वेन्द्रियाणि नियन्त्रयितुं सर्वप्रयत्नः करोषि? कारणं यत् भारतीयदण्डनीतिशास्त्रे इन्द्रियजया राज्ञः मुख्यं प्रथमं वा कर्तव्यमिति वर्णितम् अस्ति ।

श्री रामचन्द्रः कथयति- 'हे भरत, सन्धि, विग्रह, यान, आसन, द्वैधिभाव, आश्रय च एतेषां षट् गुणानाम् उपयोगं सम्यक् स्थाने करोति वा? अग्निः, जलप्लावनः, रोगः, दुर्भिक्षः, महामारी इत्यादयः पञ्चविधाः दिव्यविपदाः प्रतिरोधयितुं प्रयतन्ते वा?' 'हे भरत! राजसेवकस्य उत्पीडनै, भृत्यस्य दुर्व्यवहारै, उच्चाधिकारिभ्यः, चोरेभ्यः, लुटेरेभ्यः, मानवनिर्मितेभ्यः विपत्तेभ्यः जनानां किं भवन्तः रक्षति वा? भवन्तः एतेषां चतुर्विधं वर्गान् शान्तंकर्तुं प्रयतन्ते – क्रुद्धः, भीतः अपमानितः, लोभी च, तथा च भवन्तः शत्रुराष्ट्रस्य एतान् वर्गान् प्रोत्साहयन्ति वा ? श्री रामचन्द्रः कथयति यत्' हे भरत! बालः, वृद्ध, दीर्घकालीन रुग्णः, बहिष्कृतः, भीरुः, कायरः, लोभी, प्रलोभनशीलः, विरक्तः स्वभावः, विषयेषु लीनः, यस्य विचाराः स्थिराः न सन्ति, देवब्राह्मणयोः आलोचनां कुर्वन्, दैवेन आहतः, प्रयत्नेषु हीनः, दुर्भिक्षेण पीडितः, सैन्यविनाशादिविघ्नेषु संलग्नः, दूरदेशेनिवसन्, बहुभिः शत्रुभिः परितः, समये कार्यं न कुर्वन्, भ्रष्टा जनाः प्रतिं किं भवन्तः एतेभ्यः विशंतिवर्गस्य विग्रहकर्तुम् इच्छति वा?

इन्द्रियाणां जयं बुद्धवा षाड्गुण्यं दैव मानुषम्
कृत्यं विंशतिवर्गच तथा प्रकृति मण्डलम् ।।[1]

श्री रामचन्द्रः कथयति- "हे भरत! किं त्वं नीतिशास्त्रज्ञ मन्त्रिणां सामूहिकरूपेण व्यक्तिगतरूपेण वा परामर्शं करोषि? किं त्वं प्रपितामहादि प्रकारेण शासनं करोषि? हे भरत।" दण्डनीतिशास्त्रानुसारेण प्रजानां पालनेन सम्पूर्णपृथिव्याधिपत्यं प्राप्तुं शक्नुवन्ति तथा च प्रजानां सम्यक् धर्मानुसरणं कृत्वा परलोके अपि उत्तमं स्वर्गसुखं प्राप्नुवन्ति।

एतदातिरिक्तं अरण्यकाण्डस्य ३३ तमे सर्गे शूर्पणखा-रावणयोः संवादे राजधर्मसम्बद्धानि बहूनि वस्तूनि वयं ज्ञास्यामः। शूर्पणखा रावणाय कथयति यत् यदि राजा नीचश्रेणीसुखेषु रमते तर्हि जनाः तं बहु न आदरयन्ति। यः नृपः स्वयं काले कार्याणि न करोति सः राज्येन सह ताभिः कार्यैः सह नश्यति। सा कथयति यत् यः राजा राज्यपालनार्थं गुप्तचरान् न नियुक्तं करोति, यस्य दर्शनं प्रजानां मध्ये दुर्लभा भवति, च यस्य मैथुनभोगादिसङ्गात् स्वातन्त्र्यं नष्टं भवति, सः तादृशः राजा जनपरिहृतः भवति। यथा गजाः नदीपङ्कात् दूरं तिष्ठन्ति। हे रावण, येषां राजानां बुद्धिः, कोषः, नीतिः च – एतानि सर्वाणि तेषां वशात् न सन्ति। ते सामान्यजनाः इव एव सन्ति।

**"येषां चाराश्च कोशश्च नयश्च जयतां वर**
**अस्वाधीना नरेन्द्राणां प्राकृतैस्ते जनैः समाः।।"**[2]

शूर्पणखा रावणाय वदति- हे रावण! यः तीक्ष्णव्यवहारः करोति, भृत्येभ्यः न्यूनं वेतनं ददाति, अभिमानपूर्णः, स्वभावेन हठिना च राजा, यदा सः विपत्तौ पतति, तदा सर्वे तं त्यजन्ति। सा कथयति यत् यः राजा न स्वकर्तव्यमनुवर्तते ,भयनिमित्तेषु न भयं करोति ,सः राज्यात् बर्हि क्षिप्तः भूमौ तृणवत् उपेक्षितः भवति। शुष्ककाष्ठस्य, मृत्तिका रजः अपि जनानां किञ्चित् उपयोगः भवति, परन्तु भ्रष्टराजानाम् उपयोगः नास्ति। सा कथयति यत् यथा जीर्णवस्त्राणि पुष्पमाला च परेषां निष्प्रयोजनं तथैव च राजा अपि यदि शक्तिशालिनोऽवस्थायां भ्रष्टः भवति तथा सः अपि परेषां कृते निष्प्रयोजनं भवति। परन्तु यः राजा सर्वदा सजगः भवति, यः राज्यस्य सर्वकार्याणां सूचनां धारयति स्म, इन्द्रियाणि च वशं करोति स्म सः 'कृतज्ञः च धर्मपरायण राजा चिरकालं शासनं करिष्यति। अपि च 'भौतिकचक्षुषा' स्वपिति, सदा नीतिचक्षुषा जागृतः तिष्ठति ,यस्य च क्रोधप्रसादफलं प्रत्यक्षं भवति, जनाः तेषां पूजयन्ति।

**नयनाभ्याम् प्रसुप्तो वा जागर्ति नयचक्षुषा ।**
**व्यक्त क्रोधप्रसादश्च स राजा पूज्यते जनैः ।।** [3]

युद्धकाण्डस्य ६३ तमे सर्गे कुम्भकर्ण-राक्षसराजरावणस्य च संवादे राजधर्मसम्बद्धतथ्यस्य सूचना अपि प्राप्यते । कुम्भकर्णः राक्षसराजरावणं वदति यत् 'यः राजा स्वसचिवैः सह चर्चां कृत्वा क्षयवृद्धिस्थानरुपेण साम -दान- दण्ड इति कर्मत्रयेण कार्यारम्भं करोति , पुरुष च द्रव्यरुपसम्पतिं , देशकालविभागः, आपदानिवारयन् च कार्यसिद्धिं इति कर्मं करोति, स एव सुनीतिमार्गे स्थितः ।

पुनः कुम्भकर्णः कथयति-

**"यथागमं च यो राजा समयं च चिकीर्षति**
**बुध्यते सचिवैर्बुद्धया सुहृदश्चानुपश्यति ।।"** [4]

अर्थात् यो राजा नीतिनानुसारेण स्वमन्त्रिभिः सह क्षयादियोग्यकालं चिन्तयित्वा तदनुरूपं कार्यं करोति तथा च स्वबुद्ध्या मित्राणां भेदं करोति, सः एव कर्तव्यस्य अकर्तव्यस्य च विवेकं कर्तुं समर्थः भवति।

सः पुनः कथयति – रक्षाराजः नीतिपुरुषः समुचितसमये धर्मार्थकामस्य च सेवनं कुर्यात्। त्रिषु धर्मेषु मध्ये धर्मः श्रेष्ठः, अतः अर्थकामवपेक्षया अपि धर्मानुसरणं कर्तव्यम्। न करोति राज्ञः बहुशास्त्राध्ययनं अपि वृथा ।

सः कथयति यत् "राजा स्वमन्त्रिणां सम्यक् परामर्शं कृत्वा पञ्चविधं योगं कुर्यात् , दानं रहस्यं शौर्यं च, नय च अनयञ्च , धर्मार्थकामं च काले सेवनं करोति ,सः लोके कदापि दुःखं वा विपत्तिं वा न प्राप्नोति। अर्थशास्त्रज्ञ, बुद्धिमान्मन्त्रिणां च उपदेशं राजा सदा आदाय, यत् परिणामे तस्य हितकरं तत् एव कुर्यात्। न श्रोतव्यं तेषां अयोग्यानां , शास्त्रज्ञानाभावेऽपि ,अर्थशास्त्राज्ञानाभावेऽपि प्रचुरधनकामनां मन्त्रिणां वचनं " । यः राजा चपलत्वात् स्तुतिवचनं श्रुत्वा एव तृप्तः भूत्वा ,सहसा अचिन्तयन् किमपि कार्यं प्रति त्वरयति, तस्य एतत् दुर्बलता (छिद्रं) क्रौञ्चपर्वतस्य छिद्रस्य इव शत्रुभिः उपेक्षितं भवति |

**"चपलस्येह कृत्यानि सहसानुप्रधावतः ।**
**छिद्रमन्ये प्रपधन्ते क्रौञ्चस्य खमिव द्विजाः । ।"** [5]

सः पुनः कथयति यत् महाराज! "यः राजा शत्रुं अवज्ञाय रक्षणस्य व्यवस्थां न करोति, सः बहुदुःखानां शिकारः भूत्वा राज्यात् पतति।"

एवं श्रीराम-भारत-संवादः, शुपर्णाखा-रावण-संवादः, कुम्भकर्ण-रावण-संवादः च राजधर्मसम्बद्धैः तत्त्वैः पूरितः इति वयं पश्यामः । रावणविभीषणयोः संवादे अपि वयं पश्यामः यत् विभीषणः रावणाय नीतिविषयान् विविधान् कथयति, परन्तु रावणः तान् निराकरोति। सम्पूर्णे रामायणे विभिन्नेषु स्थानेषु नीति-राजनीतिविषये तथ्यं प्राप्नोति।

## संदर्भग्रंथसूची:-

1. रामायण अयोध्याकाण्डस्य - 100/69
2. रामायण अरण्यकाण्डस्य - 33/92
3. रामायण अरण्यकाण्डस्य – 33/21
4. रामायण युद्धकाण्डस्य - 63/8
5. रामायण युद्धकाण्डस्य- 63/19

## संकेतसूची:-

1. वाल्मिकी रामायण
2. रामचरितमानस
3. कृत्तिवास रामायण
4. रामावतारम्(कंब रामायण )

# संस्कृतानुवादसाहित्ये भारतवर्षमिति अनूदितग्रन्थस्य वैशिष्ट्यम्

**डॉ. भारतभूषणरथः**
सहाचार्यः, साहित्यविभागः
राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः

कविः सीताकान्तमहापात्रः ओडिशाराज्यस्य प्रसिद्धकविषु अन्यतमः। तस्य कविताषु "भारतवर्ष" इति ओडिआकवितासंग्रहः प्रसिद्धः। कवितासंकलनेऽस्मिन् विविध सामाजिकसंस्काराणां विशेषवर्णनं परिलक्षते। भारतस्य चित्रमिति वक्तुं शक्यते ग्रन्थोऽयम्। अस्य ग्रन्थस्य संस्कृतानुवादं कृत्वा आचार्यभागिरथिनन्दः प्रसिद्धिं प्राप्तवान्। नवदेहलीस्थितस्य लालबहादुरराष्ट्रियसंस्कृतविश्वविद्यालयस्य साहित्यविभागस्य आचार्यः प्रोफेसर् भागीरथिनन्दः। भारतवर्षम् इत्यस्य उत्कलानुदितकाव्यस्य संस्कृतानुवादसाहित्ये महत् वैशिष्ट्यम् वर्तते । अस्य ग्रन्थस्य एवं वैश्ष्ट्यं यद् मूललेखकः सीताकान्तमहापात्रमहोदयः अस्य कृते साहित्य-अकादेमीपुरस्कारं प्राप्तवान्। संस्कृतानुवादकः भागीरथिनन्दमहोदयः अपि एतस्य ग्रन्थस्य संस्कृतानुवादनिमित्तं अनुवादपुरस्कारं प्राप्तवान्।

**अनुवादकस्य भागीरथीनन्दमहोदयस्य अनुवादशैली -**

काव्यस्य मुखपुटे एव काव्यस्य नामकरणसन्दर्भे कविः लिखति– **हृन्मञ्जषायां लघुः स्वप्नः कोऽपि** अर्थात् काव्यस्मिन् कवेः कश्चन स्वप्नविशेषः प्रतिफलितो भवति। यदा काव्यस्य आमुलान्तम् अध्ययनं भवति तदानीं ज्ञायते कवेः स्वप्नः साधारणजनानां कृते एव। समाजस्य वास्तवं चित्रम् उपस्थापयति कविः स्वकीयकाव्ये। धन्यः सः अनुवादकः यः कवेः भावं भाषां च अधित्य समीचीनम् उपस्थापनं कृतवान् स्वानूदिते ग्रन्थे। भारतवर्षमिति अनूदिते ग्रन्थे विशेषतया भावानुवादस्य दर्शनं कर्तुं शक्यते। मूललेखकस्य भावः यथा सुरक्षितो भवेत् तदर्थम् अनुवादकः नन्दमहाभागः दत्तचित्तः। ओडिआभाषा अतीवमधुराभाषा। ओडिआभाषायां संस्कृतशब्दाः वहुत्र यथा तथा व्यवह्रीयन्ते। अतः शब्दानुवादे अनुवादकः प्रयत्नशीलः। अत्रानुदितपद्येषु व्याकरणस्य शुद्धता सर्वथा परिलक्षते। विषयोपस्थापने नन्दमहोदयः मूलकर्तुः काव्यं वारंवारं पठित्वा तदनन्तरमेव अग्रेसरः अभूत्। अतः न कुत्रापि मूल-ओडिआ तथा संस्कृतानुवादे विषम्यं परिलक्षते। उदाहरणं यथा –

ओडिशाराज्यस्य विश्वप्रसिद्धस्य कोणार्कसूर्यमन्दिरस्य निर्माणे एकः इतिहासः अस्त। तद् यथा - अस्य मन्दिरस्य निर्माणम् अभवत् परन्तु मन्दिरस्य अग्रभागः शिखरप्रदेशो वा कर्तुं शिल्पीनां महति समस्या आगता। सौभाग्यात् कोणार्कमन्दिरनिर्माणे यः प्रमुखशिल्पकारः आसीत् तस्य पुत्रः तत्रागतवान्। पात विशु महारणा स्वपुत्रं दृष्ट्वा चकितः। पितुः समस्यां श्रुत्वा पुत्रः धर्मपदः कोणार्कमन्दिरशिखाग्रं रात्रावेव विनिर्मितवान्। यदि राजा अमूं विषयं ज्ञास्यति यद् लघुवालकः यद् कृतवान् तत् शीिल्पिनः कर्तुमसमर्थाः तर्हि मन्दिरे नियुक्तानां द्वादशशतशिल्पकाराणां शिरःच्छेदः भविष्यतीति विचिन्त्य सः द्वादशवर्षियः वालकः द्वादशशतशिल्पकाराणां प्राणरक्षार्थं सूर्योदयात् पूर्वं मन्दिराग्रात् निकटस्थे समुद्रे स्वप्राणान् त्यक्तवान् । अयं विषयः उत्कलकिंवदन्तीषु प्रसिद्धः। विषयस्यास्य प्रतिपादनवेलायां मूललेखकस्य सीताकान्तमहापात्रस्य भावं यथार्थरूपेण प्रतिपादयति अनुवादकः भागीरथिनन्दः। तद् यथा –

**(कथय चन्द्र! तवैवोदयकाले)**
**पूर्वाशायां, स बालको धर्मपदो ग्रामात् समागतः**
**निजांशुके कानिचन वदरीफलानि बद्धा**
**अदृष्टपूर्वस्य पितुः दर्शनार्थं**
**तस्य दृशि प्रतिफलितस्त्वं न किं हसिष्यसि**
**पितुः कोमलवाक्यानि निशम्य**
**तव शुभ्रालोकेन कदापि किं**
**न विद्योतिष्यते तन्नयनतारका ?**
**अस्तु नाम, प्रातः काले स न भवतु**
**किन्तु मन्दिराग्रं विनिर्माय रात्रावेव सागरे आत्मानं व्यस्रक्ष्यत्।।**
**भा. व-३.३**

विशेषतया ओडिआ मूललेखः व्यञ्जनावृत्तौ अस्ति । तदनुसारम् अनुवादकः व्यञ्जनावृतौ एव स्वानुवादं करोति। शैलीचातृष्टा। भाषापि सुमधुराऽत्र प्रयुक्ता। वहुत्र अनुवादकानाम् अनुवादेषु परिलक्षते मूललेखः यदि सरलया भाषया तथा अभिधावृत्तिमाश्रीत्य भवति तदा अनुवादे भाषा क्लिष्टा भवति तथा व्यञ्जनां वृत्तिमाश्रीत्य अनुवादकः स्वीयां प्रतिभां प्रकटयति।

यत् पठित्वा पाठकः अर्थावगमनक्लेशत्वात् जामिता भवति। परन्तु नन्दमहोदयस्य अनुवादे शैली सर्वथा पाठकमनोहृद्या भवति। यथा पञ्चमे सर्गे "अपरेऽपि नचिकेत सः" इत्यस्मिन् विषये रवीन्द्रनाथाय गान्धिनः पत्रम् प्रस्तूतम् अस्ति। यत् यङ्ग इंडिया इत्यस्मिन् सम्बादपत्रे 13 अक्टूवर 1921 तमे सम्बत्सरे प्रकाशितम् आसीत्। तस्य अनुवादः पुस्तकेऽस्मिन् यथा –

**ये पक्षिणः शक्त्यभावात्**
**अस्माकमुत्साहप्रदानेनापि नोपरि विचरितुं शक्ताः**
**तेषां प्रत्यक्षीकरणयन्त्रणा मया परिभुक्ता।**

तथा च –

**दृष्टमपि मया दुःखपीडितेभ्यो**
**रुग्णेभ्यः कबीरगितानि श्रावयित्वा**
**सान्तयितुं न शक्यते।। भा. व- ५**

एवं ग्रन्थस्यास्य प्रति पुटं तथा प्रति पदम् अनुवादकस्य सहजां शैलीं द्रष्टुं शक्यते। वास्तवतया भारतवर्षमिति काव्यसंकलनं समाजस्य वास्तवीकिं स्थितिं शब्दार्थयोः द्वारेण प्रदर्शयति। मूललेखकः सीताकान्तमहापात्रः समाजमेव उपस्थापयति स्वकाव्ये। अतः सम्प्रति समाजचिन्तकपरकं कतिचन उदाहरणानि मयात्र प्रस्तूयते।

**ग्रामसुरक्षा –**

उक्तंकविना-

**उपदिदेश माता**
**भूमेरस्या निखिललमेव पवित्रममस्मभ्यम्**
**पत्येकं देवदारुपत्रम्, प्रत्येकं सिकताप्रान्तरोपकूलम्**
**घनारण्यस्य सकला कुज्झटिका**
**सर्वोऽधित्यका, गुञ्जन्तः समस्ताः पतङ्गाश्च**
**देवोपमाः स्मृतौ किलास्मज्जनानाम्। भा. व- १.१**

प्रथमसर्गस्य मङ्गलाचरणे मातुः उपदेशः विशिष्टं स्थानम् अधिकरोति। माता अवदत् अस्याः भुमेः सर्वमपि तथ्यम् अस्माकं कृते पवित्रतमम्। देवदारुवृक्षस्य पत्रम्, सिकता, घनारण्यस्य कुज्झटिका, सर्वमपि गुञ्जन्तः पतङ्गा अस्माकं स्मृतौ आजीवनम् भवन्ति। इदम्

मङ्गलाचरणं कवेः सीताकान्तमहापात्रस्य ग्राम्यचिन्तनम् अभिवर्णयति। अपि च भ्राता इगल भगिनी आकाशम् इति पुस्तकात् उद्धृतम् इदं मङ्गलाचरणम् अमेरिकादेशस्य सियेटल इति प्रकाशकस्य उक्तिः। तदन्तरम् एकं सुन्दरं चित्रम् निर्मितम् वर्तते, यत् चित्रं प्रथमसर्गस्य वृत्तान्तः चित्रिकरोति।

**ग्राम्यजीवनम् -**

प्रथमे सर्गे कविः नगरस्य आधुनिकं जीवनं यथा वर्णयति ततोऽपि अधिकतया ग्रामस्य सौन्दर्यम् अभिवर्णयति। साम्प्रतं समाजे ग्राम्यपरिवेशः असुरक्षितः अस्ति। वृक्षच्छेदनं तथा वन्यपशुनां वधः ग्राम्यसमीपस्थ अरण्येषु दृश्यते एव। राजनीतेः कुप्रभावात् ग्रामे ग्रामे जनाः मद्यं तथा भिन्नं भिन्नं मादकद्रव्यं सेवनं कुर्वन्ति। ग्राम्यजनाः कृषिकार्ये मनः न निवेशयन्ति। जनेषु भ्रातृभावः स्नेहः मैत्राभावश्च न परिलक्षते।

वस्तुतः पूर्वं ग्राम्यजीवनं शान्तं श्रृङ्खलितं चासीत्। परिवेशसन्तुलनं ग्राम्यजीवने दृश्यते स्म। जनेषु मैत्रीभावः ग्राम्यजीवनस्य अन्यदेकं वैशिष्ट्यमासीत्। परन्तु दिनुदिनं ग्राम्यजीवनं कलुषितं भवति। अतः कविः साहित्यमाध्यमेन ग्रामं स्मरति।ग्रामपरिवेशं श्रृङ्खलितं कर्तुं कवेः प्रचोदना समाजं सत्पथं प्रदर्शयति।

**तस्य करावलम्बेन**
**वयं शनैःशनैरग्रे गताः**
**चर्मदाहक-तप्तमरुभूमितः**
**प्राथमिकवसन्तपवन-**
**पुलिकतकरस्पर्शाय॥ भा. व- १.२**

मानवस्य पुरतः विषयद्वयं प्रतिभाति। एकत्र ग्रामस्य निर्जनकुटिराणि अन्यत्र जलाकिर्णनगराणि संदृश्यन्ते। तत्रान्विष्यति मानवः सुखस्य स्थानम्। ग्रामस्य जीर्णं कुटीरं तदानिं सुखं ददाति न तु नगरस्य जलाकीर्णं भवनम्। मनुष्यः जीवने विविधपञ्चतारकाअट्टेषु विलासपुर्णं जीवनं यापयति परन्तु तत्र सुखस्य स्थानं नास्ति। मनुष्यः शनैः शनैः विस्मरति स्वग्राम्यजीवनं। यथा चन्द्रग्रहणे चन्द्रः राहुग्रस्थो भवति तथा अस्माकम् इतिहासः दारुणः दुस्वप्न इव भवति। ग्रामं गन्तुं इच्छा सत्वे अपि मानवः किंकर्त्तव्यमूढः। जीवनस्य सर्वमपि उन्नतं पदम् एकस्मिन दिने अस्मान् त्यक्त्वा गच्छति। पुनः घनान्धकारं प्रति अस्माकं प्रत्यावर्तनं

भवति। यथा- आकाशे मेघस्य दर्शने आनन्दः एवं मेघस्य अदर्शने दुःखम् अनुभुयते तथा जीवने सुखस्य दुःखस्य च स्थितिः । कविः लिखति –

**यथाऽस्माकं साऽऽद्मा यात्रा**
**साऽलौकिकता, स च शान्तिसन्धिः**
**सर्वं मिथ्या पूर्णतो मिथ्या**
**अवतरणमेव वरं पुनरपि आलोकाद्**
**घनान्धकारे।**
**पुरस्ताद् यत् अन्धकारशतसोपानानि।**
**क्षणाय सा दुर्गतिः, सोऽन्धकारः। पुनरपि**
**प्रत्यावर्तनमारम्भं प्रति, आरम्भस्यारम्भं प्रति**
**घनवयोर्निमीलक्रीडां प्रति**
**नदीलहरी-सामगानयोर्युगलगानं च प्रति॥ भा. व- १.५**

इदं सर्वं विचिन्त्य कविः भारतमातुः पदवन्दनं करोति। कविः स्वग्राम्यजीवनं स्मरति। बाल्यकालस्य ग्रामपरिवेशः यथा सुन्दरः भवति साम्प्रतम् आधुनिकपरिवेशः न तथा। साम्प्रतं जीवनं धनार्थम् एव। सर्वेऽपि धनलोलुपाः। एवं कवेः अन्तरात्मा ग्रामाभिमुखी भवति। शिशोः जन्मकालस्य प्रथमं क्रन्दनं यस्मिन् ग्रामे भवति मृत्युः अपि तस्मिन् एव परिवेशे भवतु येन जीवनं पूर्णाङ्गं भविष्यति इति कवेः भावना तस्य ग्रामप्रीतिम् इतोपि स्पष्टयति। तदर्थं कविः उल्लिखति -

**कदा पुनः प्रतीयते जननीव**
**उपविष्टाऽन्नपात्रनिकटेऽपसार्य मक्षिकाः**
**कृष्णस्य गोष्ठात् पत्यागमनकालं प्रतिपालयन्ती**
**प्रतीक्षते वा विद्यालयात् कार्यलयाद्वा प्रत्यागमनम्**
**मानाविधान्नव्यञ्जानानि प्रस्तुवन्ती**
**सर्वामोदानन्नपात्रे एकत्रीकृत्या ॥ भा. व- १.१५**

एवं ग्रामजीवनमभिलक्ष कवेः भावः अनूदितग्रन्थेऽस्मिन् यथार्थरूपेण प्रतिविम्बितोस्ति। भागीरथिनन्दमहोदयस्य जीवनवृत्तान्तं यदा मया पठितं तदानीं ज्ञातं सोऽपि एकस्मिन् ग्रामे

जन्म लब्धवान्। सः स्वग्रामं स्निह्यति। ग्राम्यजीवनस्य वर्णनं दृष्ट्वा तस्य लेखनी इतोपि वेगेन चालिता इति तस्य स्वानुभूतिः।

**देशप्रेमः -**

**हे मातः, हे भारतवर्ष,**
**हे जननि, एतावतैव लभ्यते**
**शिशुभ्यः क्रीडनकम्,**
**समयायोपकथा, वृद्धेभ्यः स्वप्नः,**
**चातकेभ्यो वृष्टिबिन्दुः,**
**दीनचञ्चलविहागेभ्यः**
**आकाशं गीतं च,**
**लभ्यते च विरहिणे स्वीयप्रियमित्रम्॥ भा. व- १.६**

अत्र कविः भारतमातुः स्मरणपूर्वकं वन्दति शिशुस्वभावेन। कवेः भावः अनुवादकस्य लेखनीधारया सुष्ठु निस्सरति। भारतभूमिः शिशूनां कृते ददाति स्नेहसागरम्। येन शिशवः सानन्दं शैशवं यापयन्ति स्वमातृभूमेः क्रोडे। युवकेभ्यः भारतभूमिः ददाति असीमा शक्तिः। येन देशस्यास्य युवानः भिन्नभिन्न कार्येषु विजेतारः भवन्ति। बृद्धेभ्यः ददाति स्वप्नः। स च स्वप्नः वृद्धानां वार्द्धक्ये अपि युवसुलभभावं जनयति। येन ते सुखेन कालं यापयन्ति। भारतस्य भूमिः, आकाशः, जलं,वायुः तथा सर्वमपि तत्त्वम् अमृतपूरितमिति कविभावः वास्तविकतया देशप्रेमं जनयति। कदाचित् भारतस्य रूपं परमात्मनः रूपतुल्यमिति वर्णनं करोति कविः स्वकाव्ये।

**परमात्मनः निवासस्थानम्**

संसारेऽस्मिन् भगवतः निवासस्थानविषये वहूनि मतानि परिलक्ष्यन्ते। एतदर्थं धर्मभेदः – जातिभेदः – स्थानभेदः – वर्णभेदः तथा अनेकविधवैषम्यता समाजे परिलक्षते। परन्तु श्रीमद्भगवद्गीतायां भगवता श्रीकृष्णेन स्वनिवासस्थलं सूचयित्वा वदति यत् –

ज्योतिषामपि तज्योतिस्तमसः परमुच्यते।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम्।। श्री.भ.गी – त्रयोदशाध्यायः

अत्र भगवान् श्रीकृष्णः अर्जुनम् उपदिशति यत् – सः ज्योतिस्वरूपः। तमसः परं भवति भगवान्। स च ज्योतिषामपि ज्योतिः सर्वस्य हृदि वर्त्तते। एतेन ज्ञायते भगवान् न मूर्त्तौ न वा कस्मिंश्चिद् विशेषे स्थाने अपि च सर्वत्र सूक्ष्मरूपेण विराजते। तदेव कविः लिखति -

**कस्मिन्नपि मानचित्रे तालपत्रपोथिकायं वा**
**भुर्जपत्रे ताम्रफलके वा न सङ्कलयितुं शक्यं**
**त्वच्चित्रम्। घर्षणेन पुनः पुनरपि तामदृश्यसीमारेखां**
**न निर्वापयितुं प्रभावन्ति दुरन्ता असुराः॥ भा. व- १.११**

पद्येऽस्मिन् ईश्वरस्य सत्ताः केवलं स्वानुभवैः एव ज्ञायते न तु चित्रे इति कविः लिखति। अतः अभिवर्णयति कविः कस्मिन्नपि मानचित्रे अवा ताडपत्रे तथा भुर्जपत्रे ताम्रफलके वा तं देवं शङ्कलयितुं न शक्यः। अतः कविः लिखति -

**वर्णयितुं तद्रूपं सम्प्रवृत्ताः परजिता**
**अगणिताश्चित्रकाराः, स्थपतयः, कवयश्च**
**एवमपि नास्ति मार्गः परिचतः येन**
**पद्भ्यामेव प्रवेष्टव्यं तद्गुप्तमन्दिरम्॥ भा. व- १.१२**

अनेके चित्रकाराः कवयश्च .ईश्वरस्य स्वरुपं वर्णयितुं बहुप्रयत्नं कृतवन्तः परन्तु अन्ते ते पराजितः। यतः ईश्वरः निराकारः।

**प्रेमस्य वास्तवं स्वरूपम् -**

भगवतः श्रीकृष्णस्य अभिवन्दनं कृत्वा व्यञ्जनायां समाजतत्त्वं वर्णितमस्ति। विशेषतया प्रेमस्य वास्तवं रूपमभिवर्णयति अत्र। अतः नूतना रासलीला इति नाम्ना प्रसिद्धे सर्गेऽस्मिन् कविः लिखति-

**सह गोपीभिर्वनमाली**
**मिलितो यमुनापुलिनि।**
**शारदचन्द्रज्योत्स्नादीप्ता।**
**निर्मला बालुका शोभिता॥**
**कथय चन्द्र! कस्यापि प्रेमप्रतीक्षायां**
**लताकुञ्जविताने, यमुनाकूले,**

**अर्धभग्नतृणगृहवरण्डके,**
**अथवा रुग्णनगरस्य भवनच्छपार्श्वे**
**त्वां निरीक्ष्य प्रमाणीकृत्य च**
**बालिकायास्तस्या मर्मकथा न सन्तरिष्यति**
**आर्द्रीकृतनिष्कलङ्ककमलनयनयोः ॥**

साम्प्रतं प्रेमस्य मूल्यं निम्नस्तरे वर्तते। प्रेम इति नाम्ना कुसंस्कारस्य प्रवेशः तथा प्रतारणायाः प्रवेशः जायते। अतः पद्यमिदं जनमानसं पुलकयति।

**कुसंस्कारः –**

देवीपूजा इति नाम्ना प्रसिद्धे चतुर्थे सर्गे बलिप्रथायाः विरोधं करोति कविः। विशेषतया एकः दरिद्रः जनः स्वदारिद्र्यतायाः विनाशं कर्तुं स्वपुत्रीं देव्याः सम्मुखे बलिं ददाति। एतादृशः अन्धविश्वासः संसारे न भवेदिति कवेः भावना अनुवादकस्य लेखनीतः सम्यक् स्थानिता भवति। अतः कविः लिखति-

**या देवी सर्वभूतेषु क्षधारुपेण संस्थिता।**
**नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥**
**या देवी सर्वभूतेषु मातृरुपेण संस्थिता।**
**नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥**
**न किमपि ज्ञातं तेन**
**तं पिता निद्रात उत्थाप्य**
**अङ्कयन् चुम्बन् कपाटमुद्धाट्य**
**गृहान्निस्सृतः॥**
**पिता तं देव्याः पुरतः**
**निद्रातो जागरितवान्, मस्तकेन भूमिं संस्पृश्य**
**प्रणमितुं निरदिशत्।।**
**स प्राणमत्**
**एतत् स षण्मासेषु**
**प्रतिवेशिनो वृद्धान् ज्येष्ठांश्च नामं नामं**

**विज्ञातवान् पूर्णतः।।**
**हठात् पित्रा सहागतौ द्वावसुरौ**
**बलादाश्लिष्य ताम् तस्य हस्तपादान्**
**प्रकम्पोमानोऽस्थिरोऽजाशिशुरिव सः**
**क्षणेन पृथग्भुतं मस्तकं शरीराद्**
**भीषणचित्कारेण**
**ततः परं भयङ्करः शान्तः प्रातः कालः।। भा.व – ४.५**

पद्येऽस्मिन् समाजात् कुसंस्कारस्य मूलोत्पाटनार्थं प्रयाशः श्लाघनीयः।

**त्यागः –**

भारतदेशः त्यागस्य दयायाश्च प्रतीकभूतः। अतः वेद-वेदान्तादिनि शास्त्राणि उपदेशपरकाणि भवन्ति। पञ्चमे सर्गे अपरे ये नचिकेतसः इत्यस्मिन् पद्ये शास्त्रीयमूल्यवोधः तथा मानवीयचेतनायाः विचारः प्रस्तूतो वर्तते। अतः कविः लिखति-

**ये पक्षिणः शक्त्यभावात्**
**अस्माकमुत्साहप्रदानेनापि नोपरि विचरितुं शक्ताः**
**तेषां प्रत्यक्षीकरणयन्त्रणा मया परिभुक्ता।**
**दृष्टमपि मया दुःखपीडितेभ्यो**
**रुग्णेभ्यः कबीरगीतानि श्रावयित्वा**
**सान्त्वयितुं न शक्यते॥**
**यमराजस्य प्रत्यावर्तनं, क्षुधारुरस्य वटोः**
**दर्शनेन मनस्तापः, क्षतिपूरणार्थ**
**वरप्रदानमिति सर्वैरेव वेद्यते**
**किन्तु वटोस्तस्य मनो न किमप्यकामयत,**
**नाणिमाद्यष्टनिधीन्, न वा सुखसमवायम्॥**

यमराजः सर्वदा व्यस्तः भवति। बहुविधकर्मं करोति। अतः कविः लिखति-

**यमराजो नासीत्। स सर्वदा व्यस्तः**
**स्वस्य बहुविधकार्मसु**

**किं पुनः, सम्प्रति स उत्कोचग्रहणे मिथ्याभाषणे च**
**इयानभ्यस्तो निष्करुणश्च यत्**
**दिवसद्वयं किम्? तद्भवनपुरतः**
**क्षुधातुराणां नैकशिशूनां वर्षाणि प्रतीक्षायामपि**
**स न दुःखितः स्यात्**
**वरदानस्य क्व वा तत्र निरर्थकः प्रश्नः? ॥**

**धर्मस्य रक्षा -**

धर्मरक्षायै कवेः प्रचोदना सम्पूर्णे काव्ये द्रष्टुं शक्यते। संसारे धर्मस्य न्यायस्य च प्रतिष्ठापना भवेत् तथा मानवेषु शान्तिप्रतिष्ठायै भावना भवेदिति कवेः अभिप्रायः षष्ठे सर्गे वैश्वानराय आहुतिः इत्यस्मिन् पद्ये दरिदृश्यते। अतः कविः लिखति-

**पवित्रयज्ञकुण्डसंस्थापनाय**
**स्थाननिरुपण-माप-नीतिनियमानां नास्त्यावश्यकता**
**वयं तु यत्र-कुत्रापि यथेच्छं यज्ञकुण्डम्**
**अक्लेशं निर्मातुं समर्था मुहूर्तमात्रेण ॥**
**कदाचिन्निद्रितनिरीहग्रामवसतीनां**
**नग्नभग्नतृणगृहमेव यज्ञवेदी**
**कदाचित्तु निद्रितपितृपुत्रयोराश्रयभूतम्**
**अयोनिर्मितं जीपयानमपि यज्ञवेदी**
**तन्दूरीरोटिकानिर्माणार्थं प्रयुक्ता चुल्लिका**
**जनाकीर्णं मन्दिरं मसजिद् वाऽपि यज्ञवेदी ॥**
**हे देव वश्वानर! एताः किल नः**
**क्रोधहिंसासूयादीर्घस्त्रुवस्त्रुचः**
**जुहुमस्ताभिः क्रमशो यावद् हालाहलम्**
**कृयया गृहाण**
**प्रज्वलिता जिह्वा तव प्रसरतु गगने**
**जायतां च हुताशनात् पर्जन्यः**

**पर्जन्यादन्नम्, अन्नद् दीर्घः पन्थाः**
**आत्मारामं यावत्, स हि पन्था अन्तिमो निर्जनश्च॥**

कवेः अभिप्रायः यत् यदि कोऽपि मनुष्यः कुमार्गं गत्वा पुनः उत्तममार्गे आगच्छति तर्हि तदेव भवति तस्य भाग्यम्। अतः यदि कदाचित् मानवः कुमार्गे गच्छति तर्हि सः पुनः सन्मार्गमनुसरतु अपि च संसारस्य मङ्गलं करोतु इति।

**अहिंसा परमोधर्मः तथा देशप्रेमः –**

भारतस्य जातीयपिता महात्मागान्धी इति वयं जानीमः। अहिंसायाः परिपालनपूर्वकं समग्रे विश्वे अहिंसायाः प्रचाराय प्रसाराय च गान्धी वहु परिश्रमं कृतवान् आसीत्। यद्यपि देशस्वाधीनतायै तस्य महद् योगदानमासीत् तथापि तस्य अनेके स्वप्नाः न प्रपूरिताः। आततायिनः गुलिकाघातेन सः दिवंगतः। कविः तदर्थं लिखति –

**स्मरसि किं हृषीकेश !**
**विद्यालयस्य तदानीन्तनमुत्सवम्?**
**फरफरायमानां त्रिरङ्गां ध्वजाम्**
**अस्माकं कण्ठे गगनपवनमुखरितं**
**"जनगणमन......" सङ्गीतम्।**
**स्मरसि नु हृषीकेश !**
**तन्महद्दिनम्?**
**कतिपयदिनानि व्यतीतानि यत्**
**आगतं तद् दुर्दिनम्, तद् दारुणं वृत्तम्**
**विद्यालये समाचारः प्रसारितः**
**सरलस्य तस्य वृद्धस्य**
**कटितटलम्बितः समयः समाप्तः**
**गुलिकाघातेन स पतितश्छिन्नो वृक्ष इव**
**"हा राम" उच्चारणेन सकलमवसितम्**
**तस्य सूत्रचक्रं, तस्य पादुके, तस्योपनेत्रं, तस्य पुरातनं घटीयन्त्रं च**
**देशाय दुःखार्तरङ्कमङ्गलार्थं च**

**सङ्कल्पिताः स्वप्नाः क्षणेनैव नष्टाः।। भा.व – ७,१.२**

एवं गान्धीमहात्मनः स्वप्नं न पूरितमिति कवेः वर्णनम् अवश्यं मर्मभेदी वर्त्तते। अनेन क्रमेण सम्पूर्णेऽस्मिन् ग्रन्थे समाजचेतना परिपूरिता वर्त्तते। यत्र अनुवादकस्य अनुवादशैली अपि उत्कृष्टा वर्तते।

## परिशीलितग्रन्थः –

1. भारतवर्षम् – प्रो.भागीरथिनन्दः – राष्ट्रियसंस्कृतसंस्थानम् - 2010

# योगोपनिषत्प्रतिपादितयोगाङ्गेषु यमस्य विश्लेषणम्, साम्प्रतिककाले तत्प्रासङ्गिकता च

**अलोकबेपारी**
अनुसन्धाता, सांख्ययोगविभागः,
राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः
**मार्गनिर्देशकः - डॉ. तपनकुमारघडेइ**
सहायकाचार्यः, योगविज्ञानविभागः,
राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः

**उपक्रमः**

**'भूतं भव्यं भविष्यं च सर्वं वेदात्प्रसिद्धयति'**[1] इत्यस्मात्स्मृतिवचनाद्भूतवर्तमान भाविकालेषु सर्वासां विद्यानाम्मूलभूतस्थलमासीदस्ति भविष्यति च वेदशास्त्रम्। अतस्सर्वाणि ज्ञानानि वेदमूलकत्वानि संसिद्धयन्ति। वेदोऽस्ति प्राचीनतमसाहित्यिकनिदर्शनम्, वेदस्याऽन्तिमभागे स्थिताभ्यः उपनिषद्भयः एव दर्शनानां समुत्पत्तिर्जायते। दर्शनेषु योगदर्शनस्य स्थानमन्यतममस्ति, महर्षिपतञ्जलिप्रतिपादितस्य योगदर्शनस्य प्रतिपाद्यविषययोगेन चित्तस्य निर्मलता- स्थिरता-शुद्धता सम्प्राप्तुं शक्यते। अतएव योगविद्या एव आत्मोन्नतेस्साधकतमं करणत्वेन स्वीक्रियते । तथा चोक्तम्भगवता पतञ्जलिना –

**'योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः'[2]। इति।**

पुनश्च श्रीमद्भागवतपुराणे योगस्य महत्त्वमेवं प्रतिपादितम् -

**"योगो आध्यात्मिकः पुंसामतो निःश्रेयसाय मे।**
**अत्यन्तोपरतिर्यत्र दुःखस्य सुखस्य च"** [३] ।। इति ।।

**यमस्य स्वरूपम्-**

योगाङ्गेषु प्रथमस्तथा च अन्यतमोऽस्ति यमः, पुनश्च योगसाधनायां यमो भवति प्राथमिकसोपानमित। 'यम्'-धातुना सार्धं घञि प्रत्यये **'यमः'** इति पदमुत्पद्यते,

यस्यार्थस्तावन्निवृत्तिः अर्थात् यमन्ति निवर्तयन्ति इति यमाः। अतएव योऽवाच्छनीयकार्येभ्योऽवाच्छनीयप्रवृत्तिभ्यश्च निवर्तयति, सैव यमपदेन अभिधीयते। पुनश्च 'यम्-उपरमे' इति धातोरुत्तरात् अपि प्रत्ययसंयोगेऽपि **'यमः'** इति पदन्निष्पद्यते, यस्यार्थस्तावत् यम्यन्ते उपरम्यन्ते निवर्त्यन्ते हिंसादिभ्यः इन्द्रियाणि यैः। अतो य इन्द्रियाणि मनश्च हिंसाचौर्याद्यशुभकार्येभ्यो निवृत्तं कारयित्वा आत्मकेन्द्रितं कर्तुं शक्नोति, स एव यम इत्युच्यते। भगवता पतञ्जलिना यमस्य लक्षणं प्रदत्तमस्ति -

**"अहिंसा सत्यास्तेय-ब्रह्मचर्यापरिग्रहा यमाः"**[4] **। इति।।**

अतएव यमो न तु एकविषयः, स तु समष्टिगतव्यापारोऽस्ति। अहिंसासत्यादिसन्मिलितभावेन यमो नाम्नाभिधीयते। त्रिशिखिब्राह्मणोपनिषदि तथा च बभाष-

**"देहेन्द्रियेषु वैराग्यं यम इत्युच्यते बुधैः"**[5] **। इति।**

इन्द्रियायतनम् इन्द्रियाणि च प्रति वैराग्यभावः खलु 'यम' इत्युच्यते। पुनश्च 'सर्वं ब्रह्म' इत्यनेन ज्ञानेन इन्द्रियाणां संयमनमेव यमो निगद्यते तेजोबिन्दूपनिषदि । श्रीगोरक्षनाथकृतसिद्धसिद्धान्तपद्धतौ यमस्य लक्षणमेवं रूपम् – **"यम इति उपशमः, सर्वेन्द्रियजयः, आहार-निद्रा-शीत-वाता-तपजयश्च । एवं शनैः शनैः साधयेत्"** [6] **।। इति ।।**

**यमस्य प्रभेदः**

संस्कृतसाहित्यजगति यमस्योच्चावचप्रकारभेदा दरीदृश्यन्ते, यथा योगसूत्रे भगवता पतञ्जलिना पञ्चधा यमास्स्वीकृताः, ते तावत् अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः। तदुक्तञ्च -

**"अहिंसा सत्यास्तेय-ब्रह्मचर्यापरिग्रहा यमाः"** [7] **। इति ।**

योगोपनिषत्सु अर्थात् योगतत्त्वोपनिषद्याम्नातं लघ्वाहार एव यमः, अतएव लघ्वाहारो मिताहारो वा यमस्यैकमात्रप्रभेदोऽस्ति। मण्डलब्राह्मणोपनिषदि चतुर्विधा यमा निर्दिष्टाः, तत्रावलोक्यते यत् -

**"शीतोष्णाहारनिद्राविजयः सर्वदा शान्तिर्निश्चलत्वं विषयेन्द्रियनिग्रहश्चैते यमाः "**[8] **। इति।**

पुनश्च शाण्डिल्योपनिषदि, जाबालदर्शनोपनिषदि, त्रिशिखिब्राह्मणोपनिषदि, वराहोपनिषदि च यमा दशविधा उल्लिखिताः, ते तावत्- अहिंसासत्यास्तेयब्रह्मचर्यदयार्जवक्षमाधृतिमिताहारशौचानि। प्रसङ्गेऽस्मिन् उपनिषत्प्रमाणमस्ति

**"अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम्।**
**क्षमा धृतिर्मिताहारः शौचं चैति यमा दश"**[9] **।। इति ।।**

इतोऽपि पराशरसंहिता. याज्ञवल्क्यस्मृतिः, हठयोगप्रदीपिका, हठरत्नावली चादिग्रन्थेष्वपि दशविधा यमाः समुपलभ्यन्ते । श्रीमद्भागवतमहापुराणे द्वादश प्रकारा यमा उल्लिखिताः, तदुक्तञ्च -

**"अहिंसा सत्यमस्तेमसङ्गो हीसञ्चयः।**
**आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाभयम्"** [10] **।। इति।।**

एवं रूपेणाऽखिलसंस्कृतजगति यमस्य विविधाः प्रकारभेदा विद्यन्ते, परन्तु शोधलेखेऽस्मिन् केवलमात्रं योगोपनिषत्प्रतिपादितानि तत्त्वानि यथामति सविमर्श मयाऽऽलोच्यन्ते -

**(क) अहिंसा-**

'हिंस'-पदेन साकं टापि प्रत्यये हिंसा, तत्पश्चात् 'न हिंसा' इति नञ्समासे अहिंसा पदमुत्पद्यते। यस्याऽर्थस्तावद्विद्वेषभावपरित्यागः। मानवीयसमाजस्य सार्विकविकाशार्थमहिंसा खलु परमो धर्मः। यथा प्रपञ्चितम्-

**"अहिंसा परमो धर्मस्तथाहिंसा परं तपः।**
**अहिंसा परमं सत्यं यतो धर्मः प्रवर्तते"** [11] **।। इति ।।**

अतो मनसा वाचा कायेन कर्मभिश्च सर्वदा सर्वत्र सर्वभूतानि प्रत्यक्लेशजननमाचर्येरन्। प्रसङ्गेऽस्मिन् अथर्वामुनिभिरुक्तमेवम् -

**"अहिंसा नाम मनोवाक्कायकर्मभिः सर्वभूतेषु सर्वदाऽक्लेशजननम्"** [12] **। इति।**

सर्वेषां जीवानां कल्याणार्थमात्मनिष्ठपूर्वकं स्नेहपूर्णहितकरकर्मानुष्ठानमेवाहिंसा, एतस्मात्कर्मणो जीवा आत्मिकविकाशमाप्नुवन्ति । सहिंसमाचर्यते चेत्स्वस्य समाजस्य च मूल्यबोधो क्षीयते। अतो ये सहिंसमाचरन्ति, तेषां काप्युन्नतिर्न सम्भवति । अतो हिंसामतिक्रम्याऽहिंसाऽऽचरितव्या।

अहिंसाजये सर्वभूतानि प्रति विद्वेष-शत्रुता-ईर्ष्या-क्रोधादयो मनोभावा विनश्यन्ति। पुनश्च अहिंसायां प्रतिष्ठितसाधकस्योपदेशः, जीवनचरित्रम्, आचरणञ्चेति ये जना अनुसरन्ति, ते जनाऽपि सर्वभूतानि प्रति वैरभावं परित्यजन्ति। तथा चोक्तम् -

**"अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः"[13] । इति ।**

### (ख) सत्यम् -

सते हितमिति सत्यम्, 'सत्' धातोरुत्तरात् 'यत्'- प्रत्ययसंयोगे सत्यं पदन्निष्पद्यते । मनोवाक्कायकर्मभिर्मृषाकुत्सान्वितभाषणं चिन्ताञ्चोत्सृज्य सर्वदा सर्वत्र शिष्टसंयतन्यायसंगतकथपोकथनं खलु सत्यमित्युच्यते । तथा च अथर्वामुनिभिर्भाषितम् -

**"सत्यं नाम मनोवाक्कायकर्मभिर्भूतहितयथार्थाभिभाषणम् "**[14] । इति

इतोऽपि चक्षुरादीन्द्रियैः यथा दृष्टं यथा श्रुतं यथा अनुमितं तथा मनसा वाचा कायेन च परिपालनं विवेचनञ्च सत्यम् । योगसूत्रीयव्यासभाष्येऽवलोक्यते यत्- "सत्यं यथार्थे वाङ्गनसे, यथा दृष्टं यथानुमितं यथा श्रुतं तथा वाङ्गनश्चेति"[15] । पुनश्च योगीन्द्रदत्तात्रेयैस्स्पष्टीकृतम्-

**"चक्षुरादीन्द्रियैर्दृष्टं श्रुतं प्रातं मुनीश्वर ।**
**तस्यैवोक्तिर्भवेत्सत्यं विप्र तन्नान्यथा भवेत् "**[16] ।। इति ।।

सत्ये प्रतिष्ठितयोगिनो वाणी अमोघस्वरूपा भवति। अतएव सत्यवादी न केवलं स्वीयमपितु अपरजनान् ब्रह्मप्राप्त्यर्थं मार्गं प्रदर्शयति ।

### (ग) अस्तेयम् -

'न स्तेयम्' इति नञ्समासे अस्तेयपदमुत्पद्यते। स्तेयं नाम चौर्य्यकर्म इत्युक्ते अशास्त्रपूर्वकमितरजनेभ्यो धनसम्पत्तिस्वीकरणं स्तेयमिति पदवाच्यम्। अतएव परद्रव्येषु लिप्सा

खलु स्तेयस्य कारणमिति, तथा चोक्तम् -

**“प्रत्यक्ष वा परोक्ष वा रात्रौ वा यदि वा दिवा यत् परद्रव्यहरणं स्तेयं तत्परिकीर्त्तितम्”**[17] ।। इति ।।

अतएव स्तेयप्रतिषेधरूपा तथा चाऽपरव्यक्तेर्धनसम्पत्तिं प्रति पुनरस्पृहारूपा विशेषस्थितिरस्तेयमिति नाम्नाभिधीयते। योगसूत्रीयव्यासभाष्येऽवलोक्यते यत्-

“**स्तेयम् अशास्त्रपूर्वकं द्रव्याणां परतः स्वीकरणम्, तत्प्रतिषेधः पुनरस्पृहारूपमस्तेयमिति”**[18] ।

पुनश्च प्रसङ्गेऽस्मिन् अथर्वामुनिना प्रपञ्चितम्-

**“अस्तेयं नाम मनोवाक्कायकर्मभिः परद्रव्येषु निःस्पृहता”** [19] । इति ।

मनसा वाचा कायेन च सर्वदा सर्वत्र परद्रव्याणि प्रति लिप्साशून्यस्थितिरेव अस्तेयमिति निगद्यते। अत्र द्रव्यपदेन केवलमात्रं रत्नसुवर्णादयो न अवगम्यन्ते, अपि तु क्षुद्रतरतृणानि ज्ञायन्ते। तदुक्तञ्च महामुनिना दत्तात्रेयेण जाबालदर्शनोपनिषदि भाषितमेवम् -

**“अन्यदीये तृणे रत्ने काञ्चने मौक्तिकेऽपि च ।**
**मनसा विनिवृत्तिर्या तदस्तेयं विदुर्बुधाः”** [20] ।।

अस्तेये प्रतिष्ठिते सति परद्रव्येषु लिप्सा, तज्जनितदुःखञ्च विनश्यति। पुनश्च साधकस्य योगिनो वा समीपं ब्रह्माण्डस्थितसर्वरत्नानि उपस्थितानि भवन्ति। भगवता पतञ्जलिना उच्यते यत् -

**“अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम्”** [21] । इति ।

**(घ) ब्रह्मचर्यम् -**

योगसाधनायां ब्रह्मचर्यमन्यतमप्रधानमङ्गमस्ति। ‘बृहिबृद्धौ’ - धातोः 'ब्रह्म' इति पदमुत्पद्यते, ‘चर्’ धातोः ‘चर्य’ इति पदन्निष्पद्यते; अतएव ब्रह्म प्राप्तुं वीर्यं भक्षणं तथा च स्वीयमध्ये वीर्यधारणमेव ब्रह्मचर्यं पदस्य अभिधार्थः। वीर्यं संरक्षणमेव ब्रह्मचर्यस्य प्रधानोद्देश्यमस्ति। अस्य स्वरूपमस्ति -

**“ब्रह्मचर्यं नाम सर्वावस्थासु मनोवाक्कायकर्मभिः सर्वत्र मैथुनत्यागः”**[22]। इति।

जागरितस्स्वप्रश्चेत्यादिषु सर्वासु अवस्थासु मनसा वाचा कायेन च मैथुनपरित्यागः खलु ब्रह्मचर्यमिति नाम्नाभिधीयते। मैथुनपरित्यागेन वीर्यसंरक्षणं सम्भवति। पुनश्च दर्शनोपनिषदि मुनिदत्तात्रेयेणोच्यते यत्स्त्रीसङ्गपरिवर्जनमेव ब्रह्मचर्यमिति, तथा च निगदितमेवम्-

**“कायेन वाचा मनसा स्त्रीणां परिविवर्जनम्।**

**ऋतौ भार्यां तदा स्वस्य ब्रह्मचर्यं तदुच्यते”**[23] ।। इति ।।

ब्रह्मचर्यमिदं पालयति चेदस्मदीयशरीरं बलिष्ठं तेजोमयं दीर्घायुयुक्तं स्वस्थ्यञ्च भवति । पुनश्च सुतीक्ष्णदृष्टिशक्तिः, मानसिकशक्तिश्च सम्प्राप्यते साधकेन। तदुक्तञ्च-

**“ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः”** [24]। इति।

**(ङ) दया -**

‘दय’ इति पदेन साकं स्त्रीत्वार्थे टापि प्रत्यये दयापदं जायते। यस्यार्थस्तावत्करुणा, पुनश्च दयापदेन समवेदना सहानुभूतिश्चेति अन्तर्भुक्तोऽस्ति। सर्वभूतेषु दुःखविनाशप्रवृत्तिस्तथा च सर्वभूतेषु कल्याणवृत्तिर्दया पदवाच्या। दया खलु धर्मस्य मूलमिति। अथर्वामुनिना निगदितम्-

**“दया नाम सर्वभूतेषु सर्वत्रानुग्रहः”**[25]। इति।

परक्लेशान् निवारयितुं हृदि या इच्छा जायते, तदेव दया। पुनश्च सर्वभूतानां हितार्थे कृतानुग्रहो दया नाम्नाऽभिधीयते। दयाभ्याससाधका अपरं स्वीयरूपेण, अपरक्लेशान् स्वीयक्लेशरूपेण चिन्तयन्ति च। कारणादस्मात्स्वीयक्लेशवदपरक्लेशेषु व्यथिताः, पुनश्च तत्क्लेशान् विमोचयितुं प्रयत्नमाना भवन्ति।

**(च) आर्जवम् -**

दशविधेषु यमेषु आर्जवमन्यतममस्ति, यस्यार्थस्तावदृजुता सरलता वा। सर्वदा सर्वत्र सर्वान् प्रति अनुरूपाचरणस्य मानसिकता आर्जवमिति नाम्ना सूच्यते । यथा पुत्रेषु स्त्रीषु मित्रेषु अरिषु अपि च केषुचिज्जनेषु सततमेकरूपत्वमेव आर्जवं पदवाच्यमिति। तथा चोक्तम् -

**"पुत्रे मित्रे कलत्रे च रिपौ स्वात्मनि संततम्।**
**एकरूपं मुने यत्तदार्जवं प्रोच्यते मया"[26]** ।।इति।।

एकरूपत्वकारणात् सममनोभाववशात् वा सुखदुःखादिषु चित्तं न विचलति, क्रोधरागादयः कदापि चित्तं चञ्चलं कर्तुं न शक्नुवन्ति। प्रसङ्गेऽस्मिन् शाण्डिल्योपनिषदि दरीदृश्यते यत् –

**"आर्जवं नाम मनोवाक्कायकर्मणां विहिताविहितेषु जनेषु प्रवृत्तौ निवृत्तौ वा एकरूपत्वम्"[27]** ।इति।

**(छ) क्षमा –**

'क्षम्' इति धातोरुत्तरात् अङि, तत्पश्चात् स्त्रीत्वार्थे टापि प्रत्यये 'क्षमा' पदमुत्पद्यते। 'क्षमा' इति पदेन धैर्यं सहिष्णुता चेत्यादयस्सूच्यन्ते। क्षमेयं खलु वीरस्य भूषणम्। वाह्यक्षेत्रे आध्यात्मिकक्षेत्रे च कश्चिदपि क्षयोत्पादितो भवति चेदपि न कुप्यति न वा हन्ति, सा एव क्षमा निगद्यते। उक्तञ्च -

**"कायेन मनसा वाचा शत्रुभिः परिपीडिते।**
**बुद्धिक्षोभनिवृत्तिर्या क्षमा सा मुनिपुङ्गव" [28]** ।।इति।।

परन्तु शाण्डिल्योपनिषदि अथर्वामुनिरुक्तवान् केवलमात्रं नास्ति दुःखसहनम्, अपितु सुखमानन्दञ्च सहनं क्षमा इति पदेन अवगन्तव्यम्। तथा च भाषितमेवम् -

**"क्षमा नाम प्रियाप्रियेषु सर्वेषु ताडनपूजनेषु सहनम्"[29]।** इति।

अतएव अनुकूलस्थितौ प्रतिकूलस्थितौ च इतरजनेन प्रशंसितो निन्दितश्च भवति चेदपि अविचतिलरूपेण अवस्थानमेव क्षमा पदवाच्या।

**(ज) धृतिः -**

'धृ'-धातोरुत्तरात् 'क्तिन्'- प्रत्यययोगे धृतिरिति शब्दो जायते, यस्यार्थस्तावत् धैर्य्यम्, स्थिरता, दृढता, स्थैर्यञ्च। धृतिर्नाम चित्तस्य मनसो वा स्थैर्यमिति। शाण्डिल्योपनिषद्याम्नातम्–

**"धृतिर्नामार्थहानौ स्वेष्टबन्धुवियोगे तत्प्राप्तौ सर्वत्र चेतःस्थापनम्"[30]।** ।इति।।

मानवचित्तं चञ्चलस्वरूपम्, कारणादस्मात् अर्थप्राप्तौ अर्थहानौ स्वेष्टबन्धुप्राप्तौ स्वेष्टबन्धुवियोगे च अस्मदीयचित्तमतीव चञ्चलं भवति। परन्तु अस्यां स्थितौ चित्तं स्थिरकरणमेव धृतिरिति नाम्नाभिधीयते।

पुनश्च जाबालदर्शनोपनिषदि दृढसंकल्पः खलु धृतिः। यथा- वेदज्ञानान्निखिलजगत् मोक्ष मुक्तिं वा प्राप्तुं शक्नोति, नास्ति एतद्भिन्नकारणम्; एतत्संकल्पः खलु धृतिः । तथा च प्रपञ्चितमेवम्–

**“वेदादेव विनिर्मोक्षः संसारस्य न चान्यथा।**
**इति विज्ञाननिष्पत्तिधृतिः प्रोक्ता हि वैदिकैः।**
**अहमात्मा न चान्योऽस्मीत्येवमप्रच्युता मतिः”**[31] ।। इति ।।

धृतौ स्थितसाधकानां कर्माणि पूर्णता आप्नुवन्ति, चित्तवृत्तिनिरोधो भवति च। अतएव चित्तवृत्तिं नियव्य चित्तं परमलक्षे स्थिरं भवति।

**(ञ) मिताहारः-**

योगसाधनायां मनसा सार्धं शरीरस्य नियन्त्रणमवश्यमेव प्रयोजनमस्ति। यतो हि मानसिकस्थितिः शारीरिकस्थितेरुपरिष्टान्निर्भरशीला। शरीरं नियन्त्रयितुमेकोऽन्यतमोपायोऽस्ति मिताहारः। अत्र 'मित' इत्यस्यार्थोऽस्ति परिमितः, ‘आहारः’ इत्यस्यार्थोऽस्ति भोजनम्। अतएव सीमितभोजनं परिमितभोजनं वा “मिताहारः” इति पदस्याभिधार्थः। सामवेदीययोगचूडामण्युपनिषदि विद्यमानमिताहारलक्षणमेवं रूपम्-

**“सुस्निग्धमधुराहारश्चतुर्थांशविवर्जितः।**
**भुञ्जते शिवसंप्रीत्या मिताहारी स उच्यते”**[32] ।। इति ।।

अतश्श्रेष्ठं सुमधुरं सुस्निग्धञ्चेत्याहारं जठरस्य चतुर्थांशविवर्जितपूर्वकं भुञ्जीत। रूपेणानेन भगवन्तमर्पयित्वा परिमितभोजनं कर्तव्यमिति मिताहारो नाम्ना निगद्यते। पुनश्च “श्रेष्ठं सुमधुरं स्निग्धं गव्यञ्च विशेषणयुक्ताहारान् ससन्तोषं चतुर्थांशविवर्जितपूर्वकं भुञ्ज्यात्, सैव मिताहारः”[33] कथ्यते इति घेरण्डसंहिता। प्रथमद्वितीयांशो भोजनेन, तृतीयांशो जलेन च सम्पूर्येत,

अवशिष्टांशः चतुर्थांशो वा तु वायुना सम्पूर्णार्थं भोजनकाले रिक्तं संस्थापनीयमिति "चतुर्थांशविवर्जितः"- इत्यस्यार्थ उभयक्षेत्रे। पुनश्च प्रसङ्गेऽस्मिन् ऋषिदत्तात्रेयेणोक्तम् -

**"अल्पमृष्टाशनाभ्यां च चतुर्थांशावशेषकम्।**
**तस्माद्योगानुगुण्येन भोजनं मितभोजनम्"**[34] ।। इति ।।

**(ञ) शौचम्** -

'शुचि' पदेन सार्धं अणि प्रत्ययसंयोगेन शौचमिति पदन्निष्पद्यते, पुनश्च शुचेर्भावः शौचम्। शौचं नाम शुचिता शुद्धता वा। बाह्याभ्यन्तर भेदत्वात्शौचद्विविधः। शरीरस्य पवित्रता बाह्यशुचिता निगद्यते, शुचितेयं मृज्जलादिजनिता अर्थात् स्वच्छजले प्रत्यहस्नानम्, मेध्याभ्यवहरणञ्चेत्यनेन बाह्यशौचं संसिद्ध्यते। पुनश्च चित्तस्य मलानामाक्षालनमभ्यन्तरशुचिता कथ्यते। अतएव अहंकार-अभिमान-ईर्ष्या-असूयाद्यशुभचिन्ताभ्यो मनो निवृत्तं कारयित्वा आत्मचिन्तने नियुक्तकरणमेव आन्तरशौचं निगद्यते। आत्मज्ञानेन आन्तरशौचं लभ्यते। प्रसङ्गेऽस्मिन् अथर्वामुनिना प्रपञ्चितमेवम् -

**"शौचं नाम द्विविधं बाह्यमान्तरं चेति। तत्र मृज्जलाभ्यां बाह्यम्। मनःशुद्धिरान्तरम्। तदध्यात्मविद्यया लभ्यम्"**[35] ।। इति ।।

विधिवत्शौचमनुशीलयति चेन्मनसि चेतसि वा स्वाङ्गजुगुप्सा उत्पद्यते तथा च इतरजनेन सार्धं संसर्गलिप्सा नोत्पद्यते। अतएव स्वीयशरीरमितरशरीरञ्च प्रति साधकस्य योगिनो वा आकर्षणं नोत्पद्यते, इयमावस्था वैराग्यभावः कथ्यते, स तु योगस्याऽऽधारः। पुनश्च शौचजये सति चित्तशुद्धिः, तस्मान्मनसो निर्मलता, मनोनिर्मलतायाश्चित्तस्यैकाग्रता, तत इन्द्रियजयः, इन्द्रियजयादात्मदर्शनस्य योग्यता च समुपलभ्यते। प्रसङ्गेऽस्मिन् भगवता पतञ्जलिना प्रोक्तम्-

**"सत्त्वशुद्धि-सौमनस्यैकाग्रेन्द्रियजयात्मदर्शनयोग्यत्वानि"**[36]। इति।

**साम्प्रतिककालेषु यमानाम्प्रासङ्गिकता –**

योगसाधनायां नार्वाचीनकालादिदानीन्तनकालावधिः यमानां भूमिकाऽनस्वीकार्या, परन्तु साम्प्रतिककाले सर्वदा विचरणशीलजनानां समीपम् अहिंसा-सत्य-अस्तेय-दया-

क्षमादियमानामनुसरणं परिपालनञ्च अतीव आवश्यकमस्ति। एतत्तु किमर्थम्? विषयोऽयमधोलिखिते वर्ण्यते -

**व्यक्तित्वविकासे यमाः –**

व्यक्तित्त्वविकासेषु यमानां भूमिकाऽनुपेक्षणीया। 'व्यक्तित्वविकासः' इत्युक्ते शारीरिक-मानसिक-बौद्धिक-सामाजिक-आध्यात्मिकोन्नत्यन्तर्भुक्तोऽस्ति व्यक्तित्वविकासपदे। अतो मानवीयगुणविकासः खलु व्यक्तित्वविकास इति। अहिंसापालनेन सर्वान् जनान् प्रति कायिक-वाचिक-मानसिकेन हिंसामूलकभावं परित्यज्य तान् सन्मानं कर्तुं मनोभावो जायते, सत्यपालनेन आत्मानन्दानुभूतिः प्राप्तुं शक्यते, अस्तेयपालनेन अस्मदीयार्पितकर्तव्यं परिपालयितुं शक्यते, ब्रह्मचर्यपालनेन आत्मसंयमस्य शक्तिराप्तुं शक्यते च। पुनश्च दया-क्षमा-आर्जवकारणान्मानवीयगुणा अभिवर्धन्ते, यस्मान्मानवा अपरजनानां पीडा-शोक-दुःख-यन्त्रणासु सहानुभूतशीला भवन्ति। शौचात् यथैव शरीरस्य बाह्यशुचिता तथैव आन्तरिकशुचिता जायते, कारणादस्माच्चित्तशुद्धिर्भवति। एवञ्च रूपेण यमेन मानवीयगुणा ऋध्यन्ति तथा च व्यक्तित्त्वस्य विकासो भवति ।

**सामाजिकस्वास्थ्यसंरक्षणे यमाः -**

एकविंशतके विज्ञानयुगे सामाजिकस्वास्थ्यं तथा च समाजव्यवस्था क्रमागतं क्षयति। अतएव तत्संरक्षणे यमानामवदानमतीव महत्त्वपूर्णमस्ति। अहिंसापालनेन सत्यपालनेन च अशान्तसमाजेषु हिंसायुक्तसमाजेषु च पुनश्शान्तिर्मैत्रीभावश्च आगच्छति। स्वीयस्वार्थं साधयितुमितरजनान् न पीडयन्ति, परस्परं प्रति परस्परस्य विश्वासता ऋध्यति च। पुनश्च अस्तेयपालनेन समाजस्य दुर्दशा दूरीभवति, आर्थिकविकासो जायते, हत्याचौर्यादिकार्याणाञ्च लोपो भवति।

साम्प्रतिकविश्वस्य एकाऽन्यतमा प्रबला समस्यास्ति जनसंख्याबृद्धिः। परन्तु ब्रह्मचर्यपालनेन जनसंख्याबृद्धिरूपसमस्याया निराकरणं सम्भवति। पुनश्च समाजेषु बलात्कारस्य

चरित्रहीनतायाश्च समस्या निवारयति। एइडस् (AIDS) इति मारणव्याधिस्वरूपयौनसमस्याया अपि उत्पत्तिर्न भविष्यति ।

**परिवारस्य विघटनसंक्षणे यमाः–**

साम्प्रतिककाले परिवारस्य विघटनमतीव साधारणविषयोऽस्ति, यतः प्रायस्सर्वेषु परिवारेषु नानाविधसमस्या विद्यन्ते। अस्यास्समस्याया मूलभूतकारणं सन्ति परस्परं प्रति अविश्वासता-हिंसा-ईर्षा असूयादयः। परिवारस्य सदस्याः यदि परस्परं प्रति असत्यमूलकं स्तेयमूलकञ्च आचरन्ति, तर्हि अवश्यमेव परिवारस्य विच्छेदो भवति। अतएव अहिंसा-सत्य-अस्तेय- दया-क्षमा-आर्जवाद्याचरणपूर्वकं जीवनं परिपालयामश्चेत्परिवारस्य विघटनं रोद्धुं शक्नुमः।

**श्रमराहित्यनाशे यमाः–**

आधुनिके विज्ञानयुगे प्रत्यहं विज्ञानिकैर्भूयांसि यन्त्राणि सृज्यन्ते, तेषां यन्त्राणां प्रयोगेन साम्प्रतं मानवानां शारीरिकश्रमस्य न्यूनता जायते। शारीरिकपरिश्रमस्य स्पल्पपरिमाणवशाद्विविधा व्याधय उत्पद्यन्ते। योगमार्गेण यमेन च जीवनं परिपालनमतीव कष्टसाध्यं परिश्रमसाध्यमस्ति। अतएव अहिंसा-अस्तेय-सत्यादिभिर्जीवनं परिपालनं कर्तव्यम्, यतो हि मनसा वाचा कायेन च आरोग्यं आयाति।

**प्रतिस्पर्द्धा शोषणञ्च विनाशे यमः-**

आधुनिकसभ्यतायां एकस्य जनस्योपरिष्टादपरजनस्तथा च एकस्य देशस्योपरिष्टादपरदेशः अन्यायपूर्णप्रतिस्पर्द्धया शोषणं करोति। परन्तु अहिंसा-सत्य-अस्तेय-ब्रह्मचर्य-दया-आर्जव क्षमा-धृति-शौचादिभिः प्रतिस्पर्द्धा शोषणञ्च विनाशयितुं शक्नुमः। अतएव अहिंसादिपालनपूर्वकं जीवनयावनं स्यादिति।

**उपसंहृतिः-**

अतएव सर्वान्तिमे इत्थम्भाषितुम्पारयामि यद्योगोपनिषत्प्रतिपादितान् अहिंसादियमान् अनुसृत्य मनुजा जीवनं परिपालयन्ति चेन्मानवीयादर्शसभ्यतायां शीर्षकासनधारिणो भवन्ति तथा च सपरिवारे समाजे राष्ट्र ससन्मानं स्वीयस्थानमभिवर्धितुमर्हन्ति। अतएव अहिंसा-सत्य-अस्तेय-ब्रह्मचर्य-दया-आर्जव-क्षमा-धृति-मिताहार-शौचमार्गेषु जीवनं परिपालनीयमिति ।

**तथ्यसूत्राणि -**

1. मनुस्मृतिः, १२/९७
2. योगसूत्रम्, २/२८
3. श्रीमद्भागवतपुराणम्, ३/२४/१३
4. योगसूत्रम्, २/३०
5. त्रिशिखिब्राह्मणोपनिषद्, २८
6. सिद्धसिद्धान्तपद्धतिः, २/३३
7. योगसूत्रम्, २/३०
8. मण्डलब्राह्मणोपनिषत्, १/३
9. जाबालदर्शनोपनिषत्, १/६
10. श्रीमद्भागवतपुराणम्, ३३/२०/२३
11. महाभारतम्-अनुशासनपर्वः, ११५/२३
12. शाण्डिल्योपनिषत्, १/१
13. योगसूत्रम्, २/३५
14. शाण्डिल्योपनिषत्, १/१
15. योगसूत्रम्-व्यासभाष्यम्, २/३०
16. जाबालदर्शनोपनिषत्, १/९
17. यत्रोपारोपितकोशांशः, अमरकोषः, शब्दकल्पद्रुमः
18. योगसूत्रम्-व्यासभाष्यम्, २/३०
19. शाण्डिल्योपनिषत्, १/१
20. जाबालदर्शनोपनिषत्, १/११
21. योगसूत्रम्, २/३७
22. शाण्डिल्योपनिषत्, १/१
23. जाबालदर्शनोपनिषत्, १/१३
24. योगसूत्रम्, २/३८
25. शाण्डिल्योपनिषत्, १/१
26. जाबालदर्शनोपनिषत्, १/१६
27. शाण्डिल्योपनिषत्, १/१
28. जाबालदर्शनोपनिषत्, १/१७
29. शाण्डिल्योपनिषत्, १/१
30. शाण्डिल्योपनिषत्, १/१
31. जाबालदर्शनोपनिषत्, १/१८
32. योगचूडामण्युपनिषत्, ४३

33 "शुद्धं सुमधुरं स्निग्धं उदरार्द्धविवर्जितम्। भुज्यते सुरसं प्रीत्या मिताहारमिमं विदुः " ।। घे.स., ५/२१

34. जाबालदर्शनोपनिषत्, १/१९
35. शाण्डिल्योपनिषत्, १/१
36. योगसूत्रम्, २/४१

## सहायकग्रन्थसूची -

1. उपनिषत्सञ्चयनम्. सम्पा. आचार्य केशवलाल वी. शास्त्री, भाग.1, दिल्ली: चौखम्वा संस्कृत प्रतिष्ठान, 2015।

2. उपनिषत्सञ्चयनम्. सम्पा. आचार्य केशवलाल वी. शास्त्री, भाग.2, दिल्ली: चौखम्वा संस्कृत प्रतिष्ठान, 2015 ।

3. उपनिषत्सञ्चयनम्. सम्पा. आचार्य केशवलाल वी. शास्त्री, भाग. 3, दिल्ली: चौखम्वा संस्कृत प्रतिष्ठान, 2015।

4. पातञ्जल योगदर्शन, सम्पा, स्वामी भर्गानन्द, कलिकाताः उद्बोधन कार्यालय, 2018।

5. मनुस्मृतिः, सम्पा. डा. रामचन्द्र वर्मा शास्त्री, नई दिल्लीः प्रभात प्रकाशन, 2021।

6. योग उपनिषदः सम्पा. सुभाष विद्यालंकार, भाग.1, दिल्लीः प्रतिभा प्रकाशन, 2018।

7. योग उपनिषदः. सम्पा. सुभाष विद्यालंकार, भाग. 2, दिल्लीः प्रतिभा प्रकाशन, 2018।

8. योग उपनिषद् संग्रह. सम्पा. परमहंस स्वामी अनन्त भारती, भाग.1, दिल्ली: चौखम्भा ओरियन्टालिया, 2015।

# स्वातन्त्र्योत्तरसंस्कृतकथासाहित्ये प्रतिफलिता वर्णव्यवस्था

**Dr. Debashish Natta**
Assistant Professor
Department of Sanskrit
Balurghat College
Balurghat, Dakshin Dinajpur (W.B)

साहित्यं समाजस्य प्रतिबिम्बमस्ति। साहित्यरूपे दर्पणेऽस्मिन् सम्पूर्णसमाजः प्रतिबिम्बितो भवति। समाजे घटितानां विषयाणामाधारेण ये कथाकाराः कथाः लिखन्ति, तेषां कवित्वस्य मूलमन्त्रं भवति समाजं प्रति संवेदनशीलता इति। भूतकालस्य समाजः, प्रत्यक्षयथार्थवर्तमानसमाजः, अस्माकं परिकल्पितः समाजः, प्रत्यक्षसुन्दर-स्वस्थभविष्यत्समाजश्च कथाकाराणां दृष्ट्या कीदृशोऽस्ति? कीदृशो भवितव्यः? समाजस्य सुसङ्गतिः विसंगतिश्च का वर्तते? तत्र समस्याः काः? समस्यानां समाधानानि वा कानि? इति प्रश्नानामुपरि संवेदनशीलैः स्वातन्त्र्योत्तरसंस्कृतकथाकारैः समाजस्य विविधक्षेत्रं सम्यगनुभूय स्वीयकथामाध्यमेन समाजस्य विविधविषयाः उपस्थाप्यन्ते तथा समस्यानां समाधानान्यपि प्रदर्श्यन्ते। तेषां स्वातन्त्र्योत्तरसंस्कृतकथाकाराणां कथासु सम्पूर्णः समकालीनसमाजः स्फटिकः इव प्रतिबिम्बितोऽस्ति।

सम्प्रति सामाजिक-दिशाहीनता, स्वच्छन्दता, संवेदनहीनता, असहायता, अनैतिकता, दुर्बलानामुपरि प्रभुत्वस्थापनमित्यादयः समाजे दरीदृश्यन्ते। धनी-निर्धनः, सशक्त-निशक्तः, स्त्री-पुरुषः सर्वेषां कृते वस्तुतः भिन्नः भिन्नः नियमः सञ्चालितो भवतीति परिलक्ष्यते। समाजस्य इमां विसंगतिमुद्दिश्य स्वातन्त्र्योत्तरसंस्कृतकथाकारः कविवरः राजेन्द्रमिश्रः कथयति – "का कथा ज्ञानमौढ्यजडताग्रस्तस्य समाजस्य? विमुक्तनासारज्जुरिव क्रमेलको नायं पन्थानं समीक्षते। न तस्य कापि विचारसरणिः न वा स्थिरो निर्णयाधारः। समाजस्तु स्वार्थान्धः क्वचिदमृतमपि विषं घुष्यति क्वचित्पुनर्विषमप्यमृतं किं वेश्यागामिनो मन्दिरप्रवेशान्निर्वार्यन्ते? किं वा पत्नीभिः

शरीरभोगान्निषिध्यन्ते? समाजोऽयं केवलमसहायानां दोषान् पश्यति। अयन्तु शातयति केवलमार्जवोपेतान्, न तावद् रावणजरासन्धकंसप्रभृतीन्"[1]।

पूर्वं जगद्धिताय भारतीयाः स्वहितं न विचिन्त्य सर्वदा आत्मवलिदानं कृतवन्तः, किन्तु स्वातन्त्र्योत्तरभारतीयाः अधुना स्वार्थपूर्तये शोषणं निपीडनञ्च कर्तुं तत्पराः सन्ति। नैतिकमूल्यानामेतादृशस्थितिं दृष्ट्वा मिश्रमहोदयेन स्वचिन्ता प्रकट्यते यथा – "समाजोऽयं न शीलमपेक्षते, न सौन्दर्यमाद्रियते न वैदुषीं प्रशंसति, न धनवैभवं गणयति, न चरित्रे स्निह्यति, न दुराचाराय कुप्यति। विचित्रा खल्वस्य मूल्याङ्कनपद्धतिः। स्वार्थानुकूलम् अवसरमात्रं निभालयत्ययं समाजः"[2]।

स्वातन्त्र्योत्तर-संस्कृतकथाकाराणां विचार-जगत् भौतिक-जगतः एव निर्मित इति दृश्यते। कथाकाराणां कथाः प्रत्यक्षतया परोक्षतया च तस्यैव वर्गविशेषस्य, समाजस्य परिवेशस्य वा प्रतिनिधित्वं कुर्वन्ति, यत्र ते कथाकाराः निवसन्ति। अतः स्वातन्त्र्योत्तरसंस्कृतकथाः आधुनिकसंस्कृतकथाः वा सामाजिक-जीवनं तथा सामाजिकजीवनप्रक्रियायाः अन्तर्गतान् मानवजीवनस्य विविधपक्षान् प्रकाशितं कुर्वन्ति। समाजस्य प्रत्येकवर्गः स्वातन्त्र्योत्तरसंस्कृतकथानाम् आधारत्वेन स्वीकृतोऽस्ति। नास्त्येतादृशः कोऽपि विषयः, यस्य वर्णना आलोचना वा कथाकारैः स्वीयकथासु न कृता। कथासु ग्राम-नगर-परिवार-धर्म-विज्ञान-चिकित्सा-साहित्य-शिक्षा-भाषा-नारी-बालजीवनसम्बद्धाः नैकाः समस्याः प्रतिफलिताः सन्ति। उद्योगाभावः, पणप्रथा, प्रदूषणम्, अपराधः, जातिवादः, आतङ्कवादः, भ्रष्टाचारः, राष्ट्रद्रोहः, बलात्कारः, चेत्येतेषामनेकानां प्रत्यक्षसमस्यानामाधारेण विरचिताभिः कथाभिः कथाकाराणां यथार्थदृष्टेः परिचयः प्राप्यते। अत्यधिकवैदेशिकप्रभावः नैतिकमूल्यानामवक्षयः प्रभृतिविषयाः स्वातन्त्र्योत्तर-संस्कृतकथाकाराणां प्रियविषयाः वर्तन्ते।

नैतिकमूल्याधारितास्वेतासु कथासु सामाजिकन्यायस्य प्रतिष्ठां प्रति यदाग्रहः विद्यते, तस्य कारणं प्रायः सर्वेऽपि कथाकाराः नवीन-मानवतावादस्य समाजवादस्य च प्रभावेन प्रभाविताः सन्ति। समाजस्य वास्तविकस्थितिना सह सामाजिककार्यकर्तृणां, संस्थानां,

समाजसुधारकानां, राजनेतृणाञ्च प्रभावेन साम्प्रतिक-कथाकाराः स्वाभाविकतया प्रभाविताः सन्ति। अनेनैव प्रभावेन तेषां कथाः सहजरूपेण प्रस्फुटिताः जनकल्याणभावनया परिपूर्णाः च भवन्ति। एताभिरेव कथाभिः सामाजिक-जीवनसन्दर्भे तथा व्यक्तिगत-जीवनसन्दर्भे अस्माकं संवेदनशीलता सुविस्तृता भवति एवञ्च वर्तमानयुगस्य यथार्थदर्शनेन गभीर-सम्पृक्ततायाः अनुभवः भवति।

**स्वातन्त्र्योत्तरसंस्कृतकथासाहित्ये वर्णव्यवस्था –**

वर्णविषमतायाः चित्रणम् स्वातन्त्र्योत्तरसंस्कृतकथानां मुख्यविषयोऽस्ति। समाजस्य समस्यायामस्याम् अनेकानां कथाकाराणां प्रभावशालिकथाः प्रकाशिताः। समाजे मध्यमवर्गीयाणां हताशा, विडम्बना, विषमता, असामञ्जस्यता तथा च निम्नवर्गीयाणां शोषणम्, उपेक्षा, दीन-हीनदशा इत्यादिनां चित्रणं स्वातन्त्र्योत्तर-संस्कृतकथाकाराणां प्रियविषयो वर्तते। डा. बनमालीबिश्वालस्य अधिकांशकथानां पृष्ठभूमौ सर्वस्वहारी-व्यक्तीनां वर्गाणां वा जीवन-संघर्षः अदम्य-जिजीविषा च वर्णितमस्ति, तथा धनवान्-समाजस्य निराशाभावस्य, अनास्थायाः, दायित्त्वहीनतायाः च चित्रं स्पष्टमस्ति। डा. बिश्वालस्य कथासु व्याप्त-जिजीविषायाः मूलवृत्तेराधारः पूँजीवादी-व्यवस्थायां द्रष्टुं शक्यते।

प्रो. कलानाथशास्त्रिणः, डा. प्रशस्यमित्रशास्त्रिणः, डा. केशवचन्द्रदाशस्य च अनेककथासु प्रायः स्व-निर्वासितस्य मध्यमवर्गस्य अन्तर्वाह्य-संघर्षाणां निरूपणमस्ति। यत्र मध्यमवर्गस्य अस्मिताभावः सर्वहारावर्गे विलीनः भवतीति दृश्यते, तथा च एतादृशानां पात्राणां अन्तर्द्वन्द्वश्चास्ति, ये स्वास्मिताभावः संरक्षणेऽसमर्थाः एवञ्च जीवनस्य अन्तर्विरोधस्य यथार्थस्य च कद्वनुभवः तान् संघर्षस्य दुःखधारायामेकां नूतनदिशां प्रति नयति। डा. बनमालीबिश्वालस्य ‘बुभुक्षा’ इति कथासंग्रहस्य ‘कदा आगमिष्यति दूरभाषः’, ‘उपाचार्यः’, ‘अभिनवः शिशुपालः’, ‘सत्यानन्दस्य कन्याचयनम्’ इत्येतासु कथासु, डा. केशवचन्द्रदाशस्य

‘निम्नपृथिवी’ इति कथासंग्रहस्य ‘जीविका’ इति कथायां तथा ‘ऊर्मिचूडा’ इति कथासंग्रहस्य ‘प्रतिष्ठा’ इति कथायां चेत्यादिकथासु उक्त-भावनानां उत्कृष्टाभिव्यक्तिः प्राप्यते।

साम्प्रतिककथासु समाजस्य शोषितवर्गस्य प्रतिनिधित्वं निहितमस्ति। वर्तमानकथासु स्वास्तित्वरक्षणाय संघर्षरतानां पीडितानां वञ्चितानाञ्च सहज-असहजयोः तथा सरल-जटिलयोः अभिव्यक्तिरस्ति। अभिव्यक्तिषु कुत्रचित् आशावादिनां मानवानाम् अनुभूतेः प्रतिध्वनिरस्ति कचिच्च कथानां परिणतिः चमक्प्रदघटनया कटु-यथार्थभावेन च भवति। यथा डा. बनमालिबिश्वालस्य ‘जिजीविषा’ इति कथासंग्रहस्य ‘मध्येस्रोतः’, ‘उन्मुक्तद्वारस्य पराहतश्चीत्कारः’, ‘पापगर्भः’, ‘हृदयचौर्यम्’, ‘भिन्ना पृथ्वी’, ‘वंशरक्षा’; ‘नीरवस्वनः’ इति कथासंग्रहस्य ‘चम्पी’; ‘बुभुक्षा’ इति कथासंग्रहस्य ‘बुभुक्षा’ प्रभृतिकथासु तथा च डा. प्रमोदकुमारनायकस्य ‘अन्तिमसुयोगः’, ‘चौरः’ इत्यादिकथासु अस्तित्ववादस्य प्रबलता, व्यक्तिवादी-प्रवृत्तेः कारणं, नैतिक-पतनमित्यादयः उल्लिखिताः सन्ति। ‘जिजीविषा’ इति कथायां यस्यां कस्यामपि परिस्थितौ जिजीविषायाः बलेन अग्रसराणां पात्राणां नित्यदिनस्य नानाविधाः समस्याः चित्रिताः सन्ति।

डा. रवीन्द्रकुमारपण्डामहोदयेन विरचितस्य ‘छिन्नच्छाया’ इति कथासंग्रहस्य ‘पापपङ्कः’ इति कथायां निम्नवर्गीयायाः नायिकायाः कमलायाः आत्मसंघर्षः रूपायितोऽस्ति। सा उच्चवर्गीयेषु कुसंस्कारेषु स्वजीविका-रक्षणाय मानसिकद्वन्द्वस्य सम्मुखीना भवति। कमला सोमनाथबाबोः गृहे भोजननिर्माणकार्यं करोति। कमलायाः कार्यकुशलतां, व्यवहारदक्षतां प्रसन्नतायुक्तसेवाभावञ्च दृष्ट्वा गृहस्य सर्वेऽपि सदस्याः अत्यन्तं प्रसन्नाः भवन्ति। गृहस्य सर्वे जनाः तस्याः कार्यकुशलतायाः बुद्धिमत्तायाः चोपरि निर्भरशीलाः। एतदर्थं गृहस्वामिन्याः शान्तादेव्याः कमलां प्रति अतिशयः अनुरागोऽस्ति। वर्षाकाले एकस्मिन् दिने गृहस्य अन्यसदस्याः यदा बहिः आसन् तदा कमला सोमनाथबाबोः अनैतिकप्रस्तावेन अत्यन्तं व्यथिता दुःखिता च भवति तथा च विवशतानैतिकतयोः अन्तर्द्वन्द्वे किंकर्त्तव्यविमूढा भवति –

"कमलायाः निकटे समस्या आसीत् यत् कथं सा कथयिष्यति तर्हि कथं तं विषयमात्मसात्करिष्यति? अद्यैव निश्चयः कर्तव्यः। सोमनाथबाबो गृहं सेवाकर्मणे गन्तव्यं न वा? यदि न गमिष्यति तर्हि माता शान्तादेवी कमपि सेवकं प्रेषयिष्यति। चिन्तिता भवेत्। दुःखिनी भवेत्। मार्गमवश्यमवलोकयेत्। सत्यं यदि कथयिष्यति तेषां स्नेहगृहमेकस्मिन् क्षणे भस्मीभूतं भवेत्। यदि न कथयिष्यति पूर्ववद् गृहकर्म करिष्यति, तर्हि विपत्तिपर्वतो यदा कदा मस्तकोपरि निपतेत्।.....यदि कर्म न करोति, तर्हि परिवारस्य किं भवेत्? केनोपायेन जीविष्यन्ति सन्ततयः"[3]।

कथायामस्यां मानसिकद्वन्द्वेन गृहस्य सर्वेषां सदस्यानां तस्योपरि निर्भरताकारणेन च द्रवीभूता कमला सोमनाथबाबोः गृहं प्रति आकर्षिता भवति तथा च शान्तादेव्याः अतिशय-विश्वासयुक्तेन स्नेहभावेन अभिभूता कमला पुनः दिनचर्यायाः प्रारम्भं करोति। अत्र विषमसामाजिकपरिस्थितौ कमला निज-अस्तित्वम् अन्विषतीति दृश्यते।

डा. बनमाली बिश्वालमहोदयस्य 'बुभुक्षा' इति कथायां लेखकस्य सूक्ष्मः तथा संवेदनशीलदृष्टिः मन्दिरस्य पुरतः विद्यमानान् भिक्षुकान् प्रति गच्छति। एकः पङ्गुः युवक-भिक्षुकः एकस्याः अन्धबालिकायाः प्राप्तभिक्षां चोरयति। कथान्ते तस्य चौर्यवृत्तेः विवशतां प्रति अस्माभिः दृश्यते चेत् आश्चर्यं भवति, घनीभूत-दयाभावेन मनः मूढः तथा दीनव्यथया वाणी रुद्धा भवति। तस्यानुचितकार्यमिदं मन्दोद्देश्यपूरणे न, अपि तु जीवनसंग्रामे संघर्षरतानां परिवारजनानां भोजनम् उपलब्धयितुम् एव स विवशः। अत्र समाजस्य दीनहीनपक्षः करुणया पीडया च सह प्रकटितो भवति। अद्यतने प्रगतिशीलसमाजे अपि मानवः भिक्षाटने विवशः। समाजस्य अर्थसम्पन्नजनैः यथा भिक्षा दीयते, तथैव अन्यस्मिन् भिक्षुकवर्गेष्वपि परस्परं लुण्ठनं चौरञ्चेत्यादिकमपि परिलक्ष्यते। अस्यां कथायां मार्मिकव्यङ्ग्यस्य निम्नवर्गीय-समाजस्य अभावग्रस्ततायाः च प्रतिफलनमस्ति।

डा. बनमाली बिश्वालस्य 'बुभुक्षा' इति कथासंग्रहस्य 'कदा आगमिष्यति दूरभाषः' इति कथायां मध्यमवर्गीये एकस्मिन् परिवारे दूरभाषयन्त्रं संस्थापनस्य कथा दृश्यते। सतीशः

एकस्मिन् महाविद्यालये लिपिकोऽस्ति (clerk), यत्र अतिरिक्तोपार्जनस्य किमपि साधनं नास्त्येव। अतः स सत्यवादी सादाचारी चास्ति। सामाजिक-विषमतायाः कारणेन मध्यमवर्गीयाणां प्रदर्शन-भावनानां मनोविज्ञानमत्र चित्रितमस्ति। उच्चवर्गीयस्य प्रतिवेशिनः शम्भुनाथत्रिपाठिनः पत्न्याः व्यंग्येन व्यथिता सतीशस्य पत्नी विनोदिनी स्वगृहे दूरभाषं (telephone) संस्थापनस्यानुरोधं करोति। बहु प्रयासानन्तरं गृहे दूरभाषस्यागमने परिवारस्य सर्वेऽपि सदस्याः प्रसन्नाः भवन्ति। विशेषतः विनोदिनी अत्यन्तं प्रसन्ना भवति, यतो हि तस्याः स्वाभिमानस्य आत्मसन्तुष्टिः जायते। परिवारस्य सर्वे सदस्याः दूरभाषः आगमिष्यति इति धीय प्रतीक्षारताः तिष्ठन्ति, किन्तु कस्यापि दूरभाषः (phone) नैव आगच्छति। सतीशस्यानावश्यकमिदमार्थिकव्ययं व्यर्थ-सामाजिकप्रतिष्ठायाः तथा प्रदर्शननिमित्तमभवत्। अत्र उच्चवर्गद्वारा मर्माहते येन केन प्रकारेण दूरभाषं (telephone) संस्थापनस्यानन्तरं मध्यमवर्गः हास्यस्पदः भवति तथा उच्चवर्गीयाणाम् उपेक्षां व्यंग्यञ्च सहने विवशः भवति।

वर्णव्यवस्थायां शिक्षाक्षेत्रे धर्मक्षेत्रे च प्रथमस्थानाधिकारिणः ब्राह्मणाः समाजे प्रभुत्वं स्थापितवन्तः आसन्। ते अन्यसम्प्रदायानां संस्पर्शं तथा तेषां गृहं गमनम् अनुचितमिति मन्यन्ते स्म। डा. अभिराज राजेन्द्रमिश्रस्य 'राङ्गडा' इति कथासंग्रहस्य 'पौतविहगौ' इति कथायां यदा निहालः महुलीं नीत्वा आगच्छति, तदा निहालस्य पिता महुलीविषये ईदृशमेकं प्रश्नं पृच्छति – "निहाल ! ब्राह्मणकन्येयम् ?[4]"

ब्राह्मणानाम् उच्चस्थितिकारणेन अस्पृश्यदशा अत्यन्तं दयनीयासीत्। ब्राह्मणानां समीपं कोऽपि निम्नजातेः व्यक्तिः तिष्ठति चेत् ते ब्राह्मणाः शूलयन्त्रणावत् वेदनामनुभवन्ति। देवर्षि कलानाथशास्त्रिणः 'कथानकवल्ली' इति कथासंग्रहस्य 'अस्पृश्यतायाः रहस्यम्' इति कथायां दृश्यते यत् एकस्य ब्राह्मणपरिवारस्य निकटे यदा एक अस्पृश्यपरिवारः निवसति तदा ब्राह्मणपरिवारः अस्पृश्यपरिवारस्य निवासः कण्टकमिव अनुभवति –

**"किन्त्वेकस्य अस्पृश्यस्य प्रतिवेशे निवासः पण्डिताय कण्टकायते"[5]**।

स्थितिरियं केवलं निवासक्षेत्रे न, शिक्षाक्षेत्रे अपि दरीदृश्यते। उच्चकुलसम्पन्नैकः ब्राह्मणगुरुः अस्पृश्यमेकं बालकं विद्याप्रदातुं नैवेच्छति। उदाहरणमिदं महाभारते गुरुद्रोणाचार्यस्य माध्यमेनापि अस्माभिः द्रष्टुं शक्यते। तत्र एकलव्यः एकः व्याधपुत्रः इति कारणेन तस्मै गुरुः द्रोणः शिक्षां न प्रददाति। एतदेव 'अस्पृश्यतायाः रहस्यम्' इति कथायामेकः अस्पृश्यः शिष्यः चिकित्सकं भूत्वा गुरुं स्वपरिचयं कथनसमये स्मारयति–

"स्मराम्यहं बाल्यकालस्य तां घटनां यदा भवताऽहमस्पृश्य इति कृत्वा मां पाठयितुं नानुमतमासीत्, मत्पितुश्च प्रार्थना नाऽभवत्स्वीकृता"[6]।

निम्नजातेः व्यक्तिः सद्गुणैः युक्तः भवति चेदपि उच्चसम्प्रदायस्य जनाः तेन सह सम्बन्धस्थापनं सर्वदा नैवेच्छन्ति। मिश्रमहोदयस्य 'राङ्गडा' इति कथासंग्रहस्य 'कुलदीपकः' इति कथायां खटिकपुत्रः यद्यपि एकः उत्तमः विद्यार्थी अस्ति तथापि तेन सह प्रवीणचौधरी स्वपुत्रस्य मित्रतां नैवेच्छति, चौधरी स्वपुत्रं कथयति –

"त्वं चौधरी स च खटिकः। उभयोः किं सामञ्जस्यम्? किं तव कक्ष्यायाम् उच्चजातिका विद्यार्थिनो न वर्तन्ते"[7]।

अस्पृश्यतायाः भावनेयं स्वतन्त्रतायाः पूर्वं समाजे अत्यधिकतया व्याप्तासीत्, विशेषतः अस्याः भावनायाः प्रसारः ग्रामेषु अधिकः आसीत्। सवर्णाः असवर्णाः च पृथक् पृथक् समूहेषु निवसन्ति स्म। यस्मात् कूपात् सवर्णव्यक्तयः जलं स्वीकुर्वन्ति स्म, तस्मात् अस्पृश्यानां जलग्रहणे अनुमतिः नासीत्। 'राजकथाकुञ्जम्' इति कथासंग्रहस्य 'आपत्तिकाले मर्यादा नास्ति' इति कथायां सवर्णासवर्णयोः अस्यामेव समस्यायां ध्यानं प्रदीयते –

"अखिलेऽस्मिन् ग्रामे एक एव कूप आसीत्। तत्र जलग्रहणं कस्मै अपि निषिद्ध नासीत्, किन्तु इयत् प्रतिबन्धनम् अवश्यमेवासीत् यत् यदा कोऽपि सवर्णो जलं गृह्णाति, स्नाति वा तदा अस्पृश्यो जलं न गृह्णीयात्" [8]।

कूपात् जलग्रहणे यद्यपि सर्वेषामधिकारः वर्तते, किन्तु कूपस्य स्वच्छीकरणकार्यं हरिजनानामेव कर्त्तव्यमस्ति इत्यपि 'आपत्तिकाले मर्यादा नास्ति' इति कथायामुल्लिखितमस्ति –"सवर्णानां कूपस्य स्वच्छीकरणमपि हरिजनैर्विहितम्। यतो हि अस्मिन् सन्दर्भे सर्वर्णा अकर्मण्या भवन्ति"[9] ।

कुत्रचित्तु ग्रामे दलितानाम् अस्पृश्यानाञ्च कृते कूपस्योपरि आरोहणमपि निषिद्धमासीत्, यत्र भेदभावस्य नीतिः स्पष्टरूपेण दृश्यते। 'राजस्थानस्याधुनिकाः संस्कृतकथालेखकाः' इति कथासंग्रहस्य 'स्मारकम्' इति कथायाम् अस्पृश्यानां सवर्णानाञ्च एतदेव नीतिः प्रदर्श्यते कथाकारेण -

"सर्वज्ञातमस्ति यदस्मिन्नादर्शग्रामेऽद्यापि सवर्णानां हृदयपरिवर्तनं न जातमस्ति। कूपे दलितास्पृश्यानामारोहणं निषिद्धम्। भेदभावस्य नीतिरवलोक्यते"[10] ।

प्राचीनसमये अस्पृश्यानां कृते मन्दिरेषु प्रवेशोऽपि वर्जितः आसीत्। ते मन्दिरस्य कमपि पवित्रवस्तुस्पर्शने अनधिकारिणः आसन्। 'स्मारकम्' इति कथायामेव शेखरः मन्दिरस्य पवित्रपुष्पं यदा एकस्यै अस्पृश्यकन्यायै ददाति तदा शेखरोऽपि भ्रष्टः इति जनाः कथयन्ति –

"भ्रष्टोऽयं शेखरः भ्रष्टोऽयं देवालयो देवालयस्य पवित्रपुष्पमस्याः अस्पृश्यतायाः कन्यायाः अङ्के पातितमनेन" [11]।

क्वचित् निम्नजातेः जनाः सवर्णानां क्षेत्रेषु कार्यं कृत्वा जीवनं यापयन्ति स्म इति वक्तव्यमपि प्रभाकरशास्त्रिणः 'आत्मवेदना' इति कथायां प्राप्यते –

"धौकलो जात्या चर्मकार आसीत्। सः सवर्णानां क्षेत्रेषु हलादि परिचालनेन स्वजीवनं यापयति स्म"[12] ।

प्राचीनकाले व्यक्तेः कार्यं तस्य जात्या सह सम्बन्धितं भवति स्म। किन्तु तदनन्तरसमाजे तथा न भवति स्म। परिस्थितिः अनुकुले सति निम्नजातेः व्यक्तिरपि उच्चव्यापारेण उच्चोद्योगेन वा सह युक्तः भवति। किन्तु परिस्थितिः भाग्यस्य प्रतिकुला भवति चेत् उच्चजातेः व्यक्तिना अपि एतादृशं कार्यं कर्त्तव्यं भवति, येन स समाजे असम्माननीयः भवति। तथैव जात्या कुलीनः क्षत्रियव्यक्तिः परिस्थितिवशात् भोजनालये भृत्यस्य कार्यमपि करोतीति पं. गणेशरामशर्मणा विरचितस्य 'संस्कृतकथाकुञ्जम्' इति कथासंग्रहस्य 'अकिञ्चनस्यौदार्यम्' इति कथायां दृश्यते –"जातः कुलीन कश्चित् क्षत्रियो जनः परिस्थितिवशाद् भोजनालयभृत्यत्वं स्वीकृत्य कथमपि कष्टं जीवतीति विभावितम्"[13]।

वर्तमानसमाजे व्यक्तेः विद्वत्तायाः आधारः तस्मिन् निहितगुणाः एव, न तु जातिः। यथा 'गर्दभपुरे नापिताचार्यस्य प्रतिष्ठानम्' इति कथायां नापिताचार्यः निजजात्या न अपि तु स्वगुणैरेव स्वस्य विद्वत्तायाः परिचयं प्रददाति –

"जन्मना नापितोऽप्यहं संस्कारैः ब्राह्मणत्वं गतः। वस्तुतो वयं नापिताः सर्वे ब्राह्मणा एव। परन्तु यज्ञकर्मसु ऋत्विजां कर्मसु दीक्षिता कालप्रवाहे पतिताः क्रमशो नापितत्वं गतः। अहं संस्कृते मध्यमां परीक्षां वाराणसेयामुत्तीर्णोऽस्मि, हिन्दीभाषायाः साहित्यरत्नपरीक्षामुदरतम्। आंग्लभाषामपीण्टर पर्यन्तमपठम्"[14]।

सम्प्रति विवाहनिमित्तं विवाहयोग्यपुत्रस्य विवाहयोग्यकन्यायाः वा यदा अन्वेषणं क्रियते तत्रापि स्वजातेः स्ववर्णस्योपरि वा प्राथमिकता प्रदीयते। श्री द्वारकाप्रसादशास्त्रिणः 'सिद्धेश्वरी वैभवम्' इति कथासंग्रहस्य 'कर्तव्यस्य प्रत्युपहारः' इति कथायां मलखानसिंहः तस्य भगिन्याः विवाहप्रसङ्गे एतदेव स्पष्टीकरोति –

"सत्क्षत्रियास्तु केवलं क्षत्रियत्वमवलोकयन्ति। नाहमस्मि वणिक अग्रपालकायस्थो ब्राह्मणो वा। ये धनाढ्यानां पश्चात् प्रमत्ता भवन्ति अस्माकं समीपे न्यूनता कस्यास्ति। अस्माकं गैहिकीस्थितिः सैव प्राचीना वयन्तु नैजवंशमर्यादानुसारं विशुद्धक्षत्रियस्यान्वेषणं कुर्मः" [15]।

अधिकांशानां जनानां धारणेयमस्ति यत् संस्कृतवाङ्मये वर्णव्यवस्था प्राचीनैः कुसंस्कारैः आच्छन्ना निपीडिता चास्ति। किन्तु आधुनिकसंस्कृतसाहित्यस्य तथा स्वातन्त्र्योत्तरसंस्कृत-कथासाहित्यस्य विचारधारा वर्णवैषम्यजनितं भेदभावं दूरीकृत्य जाति-वर्ण-सम्प्रदायविहीनं उत्कृष्ट-मानवतावादं स्थापयति।

कालदृष्ट्या स्वातन्त्र्योत्तर-कथासाहित्यम् आधुनिक-कथासाहित्यम् इति कथयितुं शक्यते। प्राचीनकथासु आदर्शस्थापनस्य सिद्धान्तः अस्ति चेत् स्वातन्त्र्योत्तरकथासु नूतनान् यथार्थान् अन्विष्टुं प्रयासः अवलोक्यते। प्राचीनकथासु श्रेष्ठकर्त्तव्यविषयकं नैतिकाचरणविषयकञ्च प्रेरणा अस्ति तु साम्प्रतिककथासु अत्याधुनिकपरिवेशेऽस्मिन् मानवमनसः विवशतासु द्वन्द्वेषु च नवीन-मूल्यानां संस्थापनमिति परिदृश्यते। तत्र सार्थकतत्त्वाणां नीतीनाञ्च प्रकाशनमस्ति तु अत्र व्यर्थपरम्पराणां कुप्रथानाञ्च दूरीकरणे सार्थकप्रयासः दरीदृश्यते। प्राचीनकथाः सनातनमूल्यानां जडतायाः कथाः आसन् चेत् स्वातन्त्र्योत्तरकथाः तां जडतां दूरीकृत्य परिवर्तनशीलं जीवनं प्रति मानवान् सचेतयितुं सर्वदा प्रयत्नशीलाः सन्ति। स्वातन्त्र्योत्तरकथाः अस्माकं जीवने परिव्यप्तानां संगत्यसङ्गतीनां, जटिलतानां पीडानान्ञ अनुभूतेः कथाः इति।

सातन्त्र्योत्तरसमये कथासाहित्यस्य अभूतपूर्वः विकाशः समृद्धिश्च जातः इति सर्वैरप्यङ्गीक्रियते। स्वविशिष्टप्रभावबलेन स्वातन्त्र्योत्तरसंस्कृतकथासाहित्यमिति सम्प्रति सर्वाधिक-जनप्रियसाहित्यरूपेण सुप्रतिष्ठितं वर्तते। सम्प्रेषणीयतां, सहजतां, पठनीयताञ्चातिरिच्य कथासाहित्यस्य विशेषोल्लेखनीयः गुणोऽस्ति पाठकैः सह अन्तरङ्गतेति। कथासाहित्यमिति एतादृश्येका विधास्ति, या पाठकान् सहानुभूतितः आत्मानुभूतिपर्यन्तं सहजतया नेतुं सक्षमा। काव्यस्य प्रतीकात्मकतायाः, सङ्केतात्मकतायाः रहस्यात्मकतायाः च

कारणेन कदाचित् पाठकाः बौद्धिकदृष्ट्या असन्तुष्टाः भवन्ति, किन्तु कथासाहित्ये एतादृशी दुर्बोधता क्लिष्टता च विरला एव। साधारणजनैः सम्बद्धा सामान्यजनानां प्रतिनिधित्वं कुर्वन्ती साहित्यस्य कथाविधेयं जनसमाजे सर्वाधिकी जनप्रिया इति वक्तुं शक्यते। कथामाध्यमेन पाठकैः सारल्येन कथारसः अनुभूयते। सहजता, सम्प्रेषणीयता, लोकप्रियता च कथां महत्त्वपूर्णरूपेण उपस्थापयति। कथासाहित्यस्य क्षेत्रेऽस्मिन् विविधकथाकाराणाम् उत्साहपूर्वकं प्रवृत्तस्य परिणामतः सम्प्रति बहवः कथासंग्रहाः प्रकाशिताः प्रकाश्यमानाश्च वर्तन्ते। अपिच पत्रपत्रिकासु विविधानां कथानां निरन्तरतया प्रकाशनमपि भवति।

इत्थं स्वातन्त्र्योत्तरसंस्कृतकथानाम् अध्ययनेन ज्ञायते यत् अत्र केवलं परम्परा-विरोधः न, अपितु साम्प्रतिकेऽस्मिन् अत्याधुनिकपरिवेशे परम्परायाः विश्लेषणमपि वर्णितमस्ति। यथार्थ-जीवनं निरूपणेन सह आदर्शभावं प्रति जागरूकभावोऽपि परिलक्ष्यते। व्याकुलता-पीडा-अतृप्ति-सन्त्रास-व्यथा-द्वन्द्वानाञ्च रूपायणेन सह जीवनस्य दशा-दुर्दशाभिः सह आकुलानां कथालेखकानां पीडामयक्षणानाम् आस्थाः अपि प्रतिबिम्बिताः सन्ति स्वातन्त्र्योत्तरसंस्कृतकथासाहित्ये। स्वातन्त्र्योत्तरकथासु केवलं मानवानां भावविचाराणां रेकाङ्कनं न, अपितु निष्क्रियता-विचारचेतनायाः प्रवाहोऽप्यस्ति। आधुनिककथासु न केवलं शिवं सुन्दरम् अपितु सत्यस्यापि संयोगः अस्ति। स्वातन्त्र्योत्तरकथासु प्रमुखनेतृणां, नायकानां, प्रशंसनीयानां, ख्यातिप्राप्तानां जनानां केवलं न, अपितु अभिशप्तानां, दण्डितानां, तटस्थानां, अस्वीकृतानाञ्चापि भिन्ना भिन्ना कथा वर्तते। स्वातन्त्र्योत्तरकथासु सम्पूर्णतया आधुनिकपरिवेशे जीवनप्रक्रियायाञ्च सर्जनात्मकाभिव्यक्तिरस्ति। स्वातन्त्र्योत्तरकथाः कथ्यशिल्पयोः दृष्ट्या प्राचीनकथाभ्यः पूर्णतया भिन्नाः स्वतन्त्राः च। कथायाः परम्परेयं संस्कृतजगति प्राचीनकालादेव अविलरधारायां प्रवाहिता अस्ति।

स्वातन्त्र्योत्तरसमयस्य संस्कृतकथासाहित्यस्य समाजशास्त्रीयाध्ययनेन निष्कर्षरूपेण कथयितुं शक्यते यत् स्वातन्त्र्योत्तरसंस्कृतकथाकाराः समाज-राजनीति-अर्थ-धर्म-संस्कृतिञ्च तेषां लेखनस्य विषयरूपेण स्वीकृतवन्तः। तत्र संयुक्तपरिवारे विघटनस्य समस्या, दाम्पत्यविच्छेदः,

नारी-सम्बन्धीयाः विविधाः समस्याः, मद्यपानसमस्याः, पणप्रथा, आर्थिक-भ्रष्टाचारः, दण्ड-व्यवस्था, धार्मिक-विकृतयः, अतिथि-सत्कारः, वर्तमान-शिक्षाव्यवस्था प्रभृतिसमस्याः समुपस्थापिताः स्वातन्त्र्योत्तरसंस्कृतकथाकारैः। कथासु समाजस्य यत्चित्रणं चित्रितं कथाकारैः तत् रूढि-परम्पराभिः सह संयुक्तमस्ति। किन्तु समस्य परिवर्तनेन सह समाजस्य दृष्टिकोणोऽपि शनैः शनैः परिवर्तितः।

इत्थं सम्पूर्णविवेचनया स्पष्टं भवति यत् स्वातन्त्र्योत्तर-संस्कृतकथाकाराः समसामयिक-परिस्थितिभ्यः पराङ्मुखाः उदासीनाः वा न। ते कथाकाराः पूर्णरूपेण जागरूकाः सन्ति। तेषां चिन्तनानि लेखाः च समाजं नवीवदिशाप्रदाने सर्वथा समर्थाः।

वर्तमानयुगे ईदृशमेव नवीनं चिन्तनपरकं साहित्यम् आवश्यकं यत् समाजस्य अनिष्टममङ्गलञ्च दूरीकरणाय, नवीन-समाधानप्रदानाय, प्राचीन-रूढिपरम्परातः समाजं मुक्तं कर्तुं प्रयासं कुर्वत् समाजं मानवाञ्च प्रति स्वोत्तरदायित्वं पूर्णनिष्ठया निर्वहति। स्वातन्त्र्योत्तरसंस्कृतकथासाहित्यं प्रसङ्गेऽस्मिन् पूर्णतया समर्थमिति वक्तुं शक्यते।

## तथ्यसूत्राणि-

1. पुनर्नवा – पृ. सं. 126
2. इक्षुगन्धा – पृ. सं. 51
3. छिन्नच्छाया – पापपङ्कः
4. राङ्गडा – पृ. सं. 70
5. कथानकवल्ली - पृ. सं. 87
6. कथानकवल्ली - पृ. सं. 87
7. राङ्गडा – पृ. सं. 3
8. कथानकवल्ली - पृ. सं. 87
9. कथानकवल्ली - पृ. सं. 87
10. राङ्गडा – पृ. सं. 3

11. तदेव
12. राजस्थानस्याधुनिकाः संस्कृतकथालेखकाः – पृ. सं. 51
13. संस्कृतकथाकुञ्जम् – पृ. सं. 51
14. संस्कृतकथाकुञ्जम् – पृ. सं.41
15. सिद्धेश्वरी वैभवम् – पृ. सं. 46

## सहायकग्रन्थसूची


1. बीसवीं शताब्दी का संस्कृत लघुकथा-साहित्य : रुचि कुलश्रेष्ठ, परिमल पब्लिकेशन्स, 27/28, शक्तिनगर, दिल्ली-110007.
2. आधुनिक संस्कृत कथाएं-स्थिति और प्रवृत्ति : डा. अर्चना तिवारी, पद्मजा प्रकाशन, 57, बसन्त बिहार, झाँसि, इलाहावाद-211019.
3. आधुनिक संस्कृत साहित्य : ऋता चट्टोपाध्याय, प्रग्रेसिभ पाब्लिशार्स, 37A, कलेज स्ट्रीट, कोलकाता-73.
4. अर्वाचीन संस्कृत साहित्य (दिशा एवं दशा) डा. मंजुलता शर्मा व डा. प्रमोद भारतीय, परिमल पब्लिकेशन्स, 27/28 व 22/3, शक्तिनगर, दिल्ली-110007.
5. आधुनिक काल का संस्कृत गद्यसाहित्य : कलानाथशास्त्री, राष्ट्रीय संस्कृत संस्थान, जयपुर।
6. संस्कृत साहित्य का अभिनव इतिहास : डा. राधावल्लभ त्रिपाठी, विश्वविद्यालय प्रकाशन, चौक वाराणसी-221001, फोन – (0542) 2413741/2413082.
7. राजकथाकुञ्जम् : डा. प्रभाकर शास्त्री, राजस्थान साहित्य अकादमी, श्री वीरेश्वर भवन, गणगौरी बाजार, जयपुर।
8. संस्कृतकथाकुञ्जम् : डा. गणेशराम शर्मा, राजस्थान साहित्य अकादमी, उदयपुर, 1972.
9. छिन्नच्छाया : श्री रवीन्द्रकुमार पण्डा, अर्वाचीनसंस्कृतसाहित्यपरिषद्, सी-62, अक्षरधाम सोसायटि, अक्षरचौक, बडौदा-390020, दूरभाष-(0265) 5581653.
10. राजस्थानस्याधुनिकाः संस्कृतकथालेखकाः : नवलकिशोरकाँकर, डा. पुष्करदत्त शर्मा, राजस्थान संस्कृत अकादमी, उदयपुर,1980.
11. सिद्धेश्वरी वैभवम् : द्वारका प्रसाद शास्त्री, प्रेमी प्रकाशन, शाहटोला, रायबरेली, 1978.
12. कथानकवल्ली : देवर्षिकलानाथशास्त्री, हंसा प्रकाशन, 57,नाटानी हाउस, मिश्रा राजाजी का रास्ता, चांदपोल बाजार, जयपुर-302001.

 ISSN: 2320-2025

13. इक्षुगन्धा : अभिराज राजेन्द्रमिश्रः, वैजयन्त प्रकाशनम्, 8 बाघम्बरी मार्गः, भरद्वाजपुरम्, इलाहावादः – 6 (उ.प्र., भारतम्)

14. बुभुक्षा : डा. बनमाली बिश्वाल, पद्मजा प्रकाशन, 57, वसन्तविहार, झाँसि, इलाहावाद-211019.

15. राङ्गडा : अभिराज राजेन्द्रमिश्रः, वैजयन्त प्रकाशनम्, 8 बाघम्बरी मार्गः, भरद्वाजपुरम्, इलाहावादः – 6 (उ.प्र., भारतम्)

16. पुनर्नवा : अभिराज राजेन्द्रमिश्रः, वैजयन्त प्रकाशनम्, 8 बाघम्बरी मार्गः, भरद्वाजपुरम्, इलाहावादः – 6 (उ.प्र., भारतम्)

# महाभाष्ये प्रयुक्तानां लौकिकन्यायानां सान्दर्भिकं विश्लेषणम्

**डॉ. यशस्वी**
सहायकाचार्यः, व्याकरणविभागः
राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः

## भूमिका

वक्त्रा स्वेन उपस्थापितस्य पक्षस्य विषयस्य वा समर्थनाय यो युक्तिमूलको दृष्टान्त उपस्थाप्यते, यश्चायं दृष्टान्तो न्याय इत्येतच्छब्दघटितेन काकतालीयन्याय इत्येवमादिना समस्तपदेन व्यपदिश्यते; यो हि अल्पाक्षरोऽपि भूयांसमर्थं व्याचष्टे; यश्च अनिर्ज्ञातकर्तृकः; सः न्याय इत्युच्यते। नितराम् ईयते = ज्ञायते अनेन इत्यर्थे नि इत्युपसर्गपूर्वकात् इण्धातोः "परिन्योर्नीणोर्द्यूताभ्रेषयोः"[1] इति सूत्रेण घञ्प्रत्यये न्यायशब्दः व्युत्पन्नः। अत्र स्थितो घञ्प्रत्यय अभ्रेषः= उचितम् इत्यर्थे विहितः। एवञ्च दार्ष्टान्तस्य (स्वेन उपस्थापितस्य पक्षस्य विषयस्य वा) समर्थनाय उचितो (योग्यः) यो दृष्टान्त उपस्थाप्यते; तस्य औचित्यात् सामर्थ्याच्च सः न्याय इत्युच्यते।

न्यायप्रयोगपूर्वकं कस्यचिद् विषयस्य पक्षस्य वा प्रतिपादनात् सः विशदीभवति, परिपुष्टो जायते, श्रोतुः अध्येतुर्वा हृदयङ्गमश्च सम्पद्यते। लौकिकशास्त्रीयभेदेन न्यायास्सन्ति द्वेधा। ये न्यायाः लोके प्रसिद्धाः आहोस्वित् लोके भवास्ते लौकिकाः[2]। अत्र हि लोकव्यवहारात् सिद्ध्यन्तोऽर्थाः दृष्टान्तरूपेण भवन्ति। एवञ्च लौकिकन्यायानाम् आयतनं लोकः। एवं सत्यपि लौकिकन्यायानाम् इदं वैलक्षण्यं यदमी लोकेऽपि प्रयुज्यन्ते, शास्त्रेऽपि च। शास्त्रीयन्यायास्तु कपिञ्जलरथकारादयः शास्त्र एवोद्‌तभूताः, शास्त्र एव च प्रयुक्ताः।

## उपक्रमः–

महामुनिपतञ्जलेः व्याकरणमहाभाष्येऽपि तत्तत्पक्षसमर्थनाय भूयिष्ठाः लौकिकन्यायाः विन्ययुज्यन्त। महाभाष्ये अमीषां विनियोगात् चन्दने पुष्पमिव सुवर्णे गन्ध इव चाभवत्। अत्र विनियुक्तानां न्यायानां कतिचिदेव स्थालीपुलाकन्यायेन सान्दर्भिकविश्लेषणपूर्वकं विविच्यन्ते।

१. **कूपखानकन्यायः -** महाभाष्यस्य पस्पशाभिधे प्रथमाह्निके शब्दस्य ज्ञाने धर्म आहोस्वित् प्रयोगे इत्येवं मीमांसायां शब्दस्य ज्ञाने धर्म इत्येतस्य पक्षस्य समर्थनाय सिद्धान्तिना न्यायोऽयम् उपास्थाप्यत।

तथा हि एकैकस्य साधुशब्दस्य अनेके अपभ्रंशास्सन्ति। तद्यथा एकस्यैव गौः इति साधुशब्दस्य समानार्थकाः गावी, गोणी, गोता, गोपोतलिका इत्येवमादयो नैके अपभ्रंसास्सन्ति। एवं सति एकस्य साधुशब्दस्य ज्ञाने यावान् धर्मः(पुण्यं) जायते, एकस्यैव तस्य साधुशब्दस्य नैकेषाम् अपभ्रंशानां सत्त्वात् तेषां ज्ञानात् अधर्मः(पापम्) अपि भूयान्(अधिकतरः) जायते। वादिना एवंविधे आक्षेपे कृते सः कूपखानकन्यायेन परास्तः। तद्यथा कूपखानकः कूपखननवेलायां धूलिकणैः मृत्तिकया च अवकीर्णो भवति, अथापि कूपखननान्ते तत्र यद्वारि विन्दति, तेन वारिणा मृत्तिकां धूलिकणांश्चापाकुरुते; एवम् इहापि अपशब्दज्ञानात् जात अधर्मः साधुशब्दस्य ज्ञानात् सञ्जातेन धर्मेण अपाक्रियते।

२. **तन्मध्यपतितन्यायः-** “येन विधिस्तदन्तस्य”[३] इत्येतस्य सूत्रस्य भाष्ये तदेकदेशभूतस्तद्ग्रहणेन गृह्यते इत्युक्त्वा न्यायोऽयम् आश्रितः।

तथा हि सर्व इति प्रातिपदिकात् “अव्ययसर्वनाम्नाकच् प्राक् टेः[४]” इति सूत्रेण अन्त्यादकारात् पूर्वम् अकच्प्रत्यये सर्वक इति जाते “सर्वादीनि सर्वनामानि[५]” इति सूत्रेण तस्य सर्वनामसंज्ञा न स्यात् ; सर्वादिषु अकज्रहितस्य सर्व इति शब्दस्य पाठात्। इत्थमेव उच्चकैः इति अकज्विशिष्टस्य अव्ययस्य स्वरादिगणे पाठाभावात् “स्वरादिनिपातमव्ययम्[६]” इति सूत्रेण तस्य अव्ययसंज्ञा न स्यात्। एवंविधे प्रश्ने कृते तन्मध्यपतितन्यायेन समाहितं भाष्ये। तद्यथा अनेका नद्यो गङ्गां प्रविष्टा गङ्गाग्रहणेन, यमुनां प्रविष्टा यमुनाग्रहणेन च यद्वत् गृह्यन्ते; देवदत्तायां स्थितो गर्भो देवदत्ताग्रहणेन यद्वद् गृह्यते; तद्वत् अकजादीनामपि समुदायान्तःपातित्वात् तदवयवभूतत्वात् सर्वाद्यानुपूर्वीविशिष्टसमुदायग्रहणेन अकजाद्यवयवविशिष्टानां सर्वक- उच्चकैः इत्येवमादीनामपि ग्रहणं सिद्ध्यति।

सूत्रकारः पाणिनिरप्यमुं न्यायम् अशिश्रियत्। अत्र च “नेदमदसोरकोः”[७] इति सूत्रे अकोरिति पर्युदासः ज्ञापकम्। तथा हि “नेदमदसोरकोः” इति सूत्रेण ककाररहिताभ्याम् इदम् अदस् इत्येताभ्यां परस्य भिसः ऐस् इत्यादेशो निषिद्ध्यते। उदाहरणम्- एभिः, अमीभिः इति। किन्तु इदकम् अदकस् इत्येतयोः अकज्विशिष्टयोः इदन्त्वाभावात् अदस्त्वाभावादेव च एतद्विषये ऐसादेशनिषेधस्य अप्राप्त्या अकोः इति पर्युदासनिषेधो व्यर्थः सन् अस्य न्यायस्य ज्ञापकसिद्धत्वं शास्त्रीयत्वं चापि ख्यापयति। ज्ञापिते तु अस्मिन् न्याये इदङ्ग्रहणेन अकज्विशिष्टस्य इदकम् इत्यस्यापि ग्रहणात्; अदस्ग्रहणेन च अदकस् इति अकज्विशिष्टस्यापि ग्रहणात् तत्र प्राप्तम् ऐसादेशनिषेधं निषेद्धुम् अकोरिति निषेधः चरितार्थो भवति।

अत्रेदं ध्यातव्यं यदयं न्यायः परिच्छिन्नपरिमाणे पञ्च सप्त इत्येवमादौ; द्रोणः खारी इत्येवमादौ च न प्रवर्तते; तत्र एकेनापि अपाये व्यवहारस्य अन्यथोपपत्तेः।

**३. अदग्धदहनन्यायः -** “इको झल्”[८] इति सूत्रे भाष्ये स्वपक्षसमर्थनाय वादिना अयं न्याय आश्रितः।

तथा हि “इको झल्” इति सूत्रेण इकः परस्य झलादेः सन्प्रत्ययस्य कित्त्वं विधीयते। एवं स्थिते इकः परस्य सनः कित्त्वं किमर्थमुच्यते इति प्रश्ने चिचीषति(चेतुमिच्छति), तुष्टूषति(स्तोतुमिच्छति) इत्येवमादिषु सन्नन्तधातुरूपेषु “इको झल्” इति सूत्रेण सनः कित्त्वात् “क्ङिति च”[९] इति सूत्रेण गुणनिषेधार्थं सनः कित्त्वमुच्यते इति समाहितम्। ततः पूर्वपक्षिणा चिचीषति इत्येवमादिषु प्रयोगेषु “अज्झनगमां सनि”[१०] इति सूत्रेण दीर्घविधानसामर्थ्यात् ह्रस्वस्य इकः विषये प्राप्तस्य गुणस्य दीर्घत्वं बाधकं भविष्यतीत्युक्तम्। तदा सूत्रारम्भवादिना दीर्घस्य इकः सनि परे गुणः प्राप्नोति; तद्वारणाय सनः कित्त्वमुच्यते इत्यभिहितम्। ततः पश्चात् दीर्घस्यापि इकः “अज्झनगमां सनि” इति सूत्रेण दीर्घविधानात् गुणे बाधिते सनः कित्त्वं व्यर्थमेव खलु? इत्याक्षेपः कृतः। आक्षेपस्यास्य निरासाय स्वपक्षस्य समर्थनाय च सूत्रारम्भवादिना अदग्धदहनन्यायः तत्राश्रितः। स्वभावतोऽग्निर्यथा अदग्धमेव पदार्थं दहति, न तु दग्धं, तथा “अज्झनगमां सनि” इति सूत्रेण ह्रस्वस्यैव इकः दीर्घो विधीयते; न तु दीर्घस्य

इको दीर्घः; तस्य तत्र स्वभावत एव विद्यमानत्वात्। एवञ्च एतन्न्यायप्रोद्बलनाद् "इको झल्" इति सूत्रेण सनः कित्त्वविधानमावश्यकमेवेति सूत्रारम्भवादिना स्वीयः पक्षः समर्थितः।

४. **पर्जन्यन्यायः** - "इको झल्" इत्येतत्सूत्रभाष्य एवायमपि न्याय आश्रितः। अदग्धदहनन्यायस्य प्रतिद्वन्दितया न्यायममुम् उपयुज्य सूत्रारम्भवादिनः पक्षस्तत्र प्रतिवादिना खण्डितः।

तथा हि अदग्धदहनन्यायात् "अज्झनगमां सनि" इति सूत्रेण दीर्घस्य यस्य इकः दीर्घो न भवति; तस्य इकः सनि परे कित्त्वविधानार्थम् "इको झल्" इति सूत्रमावश्यकम् इत्येवं सूत्रारम्भवादिना उक्ते पर्जन्यन्यायात् "अज्झनगमां सनि" इति सूत्रेण दीर्घस्यापि दीर्घप्रवृत्त्या "इको झल्" इति सूत्रं नावश्यकमिति प्रतिवादिना प्रत्युक्तम्। पर्जन्यो यथा अपेक्षितजलेषु क्षेत्रादिषु, अनपेक्षितजलेषु नदीसमुद्रादिषु च समं जलं वर्षति प्रयोजनमीमांसां विना; तद्वत् दीर्घविधायकम् "अज्झनगमां सनि" इति सूत्रमपि दीर्घाणां दीर्घविधानेन किं प्रयोजनम्? इत्येवं प्रयोजनविचारम् अकृत्वा ह्रस्वानामिव दीर्घाणामपि दीर्घादेशं विधत्ते। तथा च पर्जन्यन्यायेन अदग्धदहनन्यायं निरस्य "इको झल्" इति सूत्रस्य आवश्यकता प्रतिवादिना खण्डिता।

**उपसंहारः –**

अनया रीत्या महाभाष्ये भूयिष्ठा न्याया आश्रिताः तत्तत्पक्षसमर्थनाय। अमीषां भूयिष्ठानां न्यायानां महाभाष्ये सत्त्वादेव महाभाष्यं न्यायानामाकर इव सञ्जातं सत् आकर इति नाम्ना अभिधीयते विद्वद्वृन्दारकवृन्दे। इमे न्यायाः महाभाष्ये तथा सुगुम्फिताः यथा अध्येतॄणां कृते न्यायपरिचयः न्यायप्रयोगसन्दर्भश्च सुष्ठु विज्ञायेत। तीर्थदर्शिना पतञ्जलिना महाभाष्ये यावान् यादृक्षश्च सद्विनियोगः न्यायानां कृतः; तावान् तादृक्षश्च सद्विनियोगस्तेषाम् अन्यैर्न कृत इति सुधियां मतम्। न्यायानां विनियोगात् भाष्यकारः दुरूहान् अरसांश्च शब्दशास्त्रविषयान्(भाषाविज्ञानविषयान्) सरलान् सरसांश्च विधाय विशदीचकार। तदेतत् सर्वमभिहितं पदवाक्यप्रमाणज्ञेन भर्तृहरिणा[११]-

**कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना।**
**सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने।। इति**

अमुना शोधलेखेन महाभाष्ये प्रयुक्तानां लौकिकन्यायानां सान्दर्भिकं विश्लेषणं दिङ्मात्रं प्रास्तावि।

**इति शम्।**

## पादटिप्पण्यः -

१. अष्टाध्यायी – अध्यायः – ३,पादः – ३, सूत्रम्- ३७
२. लौकिकाः इत्यत्र लोके विदिताः = प्रसिद्धाः इत्यर्थे लोकसर्वलोकाठ्ठञ् इति सूत्रेण ठञ्प्रत्ययः। अथवा लोके भवाः इत्यर्थे अध्यात्मादेष्ठञिष्यते इति वार्तिकेन ठञ्प्रत्ययः।
३. महाभाष्यम्- १.१.७१
४. अष्टाध्यायी- ५.३.७१
५. अष्टाध्यायी- १.१.२६
६. अष्टाध्यायी- १.१.३६
७. अष्टाध्यायी- ७.१.११
८. महाभाष्यम्- १.२.९
९. अष्टाध्यायी- १.१.५
१०. अष्टाध्यायी- ६.४.१६
११. वाक्यपदीयम् – काण्डम् – २, कारिका – ४८६

## सन्दर्भग्रन्थसूचनी -

**१.** महाभाष्यम् (प्रदीपोद्द्योतभाष्यसहितम्), चौखम्बा कृष्णदास अकादेमी, वाराणसी- २००२ ।
**२.** अष्टाध्यायीसूत्रपाठः, रामलाल कपूर ट्रस्ट, सोनीपत हरियाणा- १९९८ ।
**३.** वाक्यपदीयम्(हेलराजीय-अम्बाकर्त्रीव्याख्यासहितम्), सम्पूर्णानन्दसंस्कृतविश्वविद्यायः, वाराणसी- १९९८ ।

# सर्वे भवन्तु सुखिनः

**डॉ.सत्यव्रतनन्दः**
अनुसन्धानसहायकः
राष्ट्रीय भारतीय चिकित्सा संपदा संस्थान
हैदरावाद

**शोधसारः**

इह भूमौ विश्वभ्रातृत्वभावनया तत्तत्सङ्गठनद्वारा वा महामारीकरोनासंक्रमणकाले अक्लान्तचेष्टया विपद्-ग्रस्तानां दुःखनिवृत्तिपुरस्सरं सुखविधानम् इत्येकमतीव प्रासङ्गिको विषयः। तथा एतस्मिन्नेव सङ्कटमुहूर्ते स्वमनसि वसुधैव कुटुम्बकम् इति भावनां दृढीकृत्वा प्रवासीनां स्वदेशप्रत्यावर्तनाय या महती कल्पना तथा स्वयं सङ्कटदशायां प्रवर्तमानोऽपि विदेशातुराणां कृते यत् औषधवितरणम् इत्यादि उदारभावनया विश्वभ्रातृत्वस्य परिचयं प्रदाय 'सर्वे भवन्तु सुखिनः' इति महासङ्कल्पाख्यस्य व्रतस्य सद्व्रती अस्ति एषो भारतवर्षः। भारतस्य महती प्रगतौ मानवसमाजस्य सौमनस्यं, संस्कारः, शैली, विचारः, व्यवहारश्चेत्येतत्सर्वं कथं प्रभावपूर्णमस्ति, न केवलं विपत्तौ सुरक्षा, अपि तु सर्वकालं भारतस्य श्रेष्ठतायै मूलं कारणभूतं प्रत्यहं मानवबुद्धिं दिव्यत्वं प्रति प्रेरयति। सा भारतीयता पुनः अभ्युन्नतिं प्राप्नोत्विति प्रस्तुतलेखस्यास्य अभिप्रायः। आशासे महाजनो येन गतः स पन्था इति सत्पुरुषाणां पदचिह्नानि सर्वकालं जनानाम् सुखाय(अभ्युन्नतये) पथप्रदर्शकानि भविष्यन्तीति ।

**प्रस्तावना**

वैदिककालादारभ्यः एतावता प्रवर्तमाना महानुभावानां महर्षीणां सर्वापि कृतयः सर्वजनहिताय सर्वजनसुखाय ह्येव समर्प्यमाणबुद्धियुक्ता वर्तते। न जाने परार्थो हि स्वार्थ इति मन्यमानैः कतिपयैः पुरुषैः काले काले एषो धरापृष्ठः हसितुं नन्दितुं च शक्तः अभूत्, अरण्ये जन्तवो, लता, वनस्पतयश्च जनैः रक्षिताः, जनोपकारकृताश्च। मानवव्यवहारेण विहङ्गाः पशवश्च स्वच्छन्देन सहचारीभावनया चाकाशापेक्षया गृहप्रेमिणः आसन्निितीतिहासपृष्ठासु बाहुल्येन दृश्यते। एको जनः स्वकर्त्तव्यकर्मणा अर्जितार्थसामर्थ्येण पशु-पक्षीभिः सार्द्धं सपरिवारं भोजयन्

सानन्दमतिष्ठदित्यपि बहुकालं परिलक्षिता वर्तते। यद्यपि विदुषः चार्वाकदर्शनं नास्तीकमिति अवोचन्, तथापि तस्य यावज्जीवेत्सुखं जीवेत् इत्येतावता यद्वचनं काले काले सर्वैः शंसितम् अङ्गीकृतमेव। शीलं परं भूषणम् इति मनसि निधाय सर्वदा जनाः सर्वैः जुष्टास्तुष्टाः पूज्याः प्रसिद्धाश्चेति बहुधा दृश्यन्ते। प्रकृत्यनुकूलव्यवहारो भवति सुखजीवनस्य चिह्नम्। स्वास्थ्यबलवत्तरं, सुन्दरजीवनचर्या, संस्कृतभोजनं, शुद्धजलवायुः, नैतिकव्यवहारः, बुभूक्षानाशः, दारिद्र्यनाश इत्येवंभूतविषया मानवस्य सुखविधाने हेतवो भवन्ति। परेषां सुखेन स्वात्मसुखमिति प्रकृष्टानन्दाख्यविषयो मनसि धारणीय ह्येव। लेखस्यास्य मुख्यविन्दवः महामुनिवाग्भटकृताष्टाङ्गहृदयतः संगृहीताः। विषयानुगुणं मदीयविचाराः पाठकानां चित्सुखाय भविष्यतीति मे भावना ।

**ॐ देवानां भद्रा सुमतिर्ऋजूयतां देवानां रतिरभि नो नि वर्तताम् ।**

**देवानां सख्यमुप सेदिमा वयं देवा न आयुः प्र तिरन्तु जीवसे ।।**[24]

अत्र भद्रा पदस्य सुख-कल्याणमिति अर्थः। सुखयित्री भजनीया वा देवानां शोभना मतिरनुग्रहात्मिका बुद्धिरस्माकमस्त्विति प्रार्थना। ऋजूमार्जवयुक्तं सम्यगनुष्ठातारं यजमानमात्मन इच्छतां तथा देवानां दानम् अस्मान् आभिमुख्येन नितरां वर्तताम्। तदभिमतफलप्रदानमप्यस्माकं भवतु। वयं तेषां देवानां सख्यं नाम सखित्वभावं कर्म वा प्राप्नुवाम। तादृशा देवा जीवितुमस्माकमायुः, सुखञ्च प्रवर्धयन्तु इति वैदिकी चेतना। **'मन एव मनुष्याणां कारणं वन्धमोक्षयोः**[25]**'** इति भगवदुक्तिः स्मारयति यत् सुखजीवनस्य हेतुभूतं भवति अस्माकं मनः। सुख दुःखयोः प्रकृष्टानुभवः मनसि एव जायते । मनो यदि प्रफुल्लं तर्हि कारणं विनापि जनः आनन्दीभवति। शान्तिरपि सुखस्य एकाऽन्यतमा स्थितिः वर्तते। **त्यागात्**

[24] ऋक्.1.89.1

[25] ब्रह्मबिन्दूपनिषद्.2

**शान्तिरनन्तरम्**[26] इति कर्मफलात् आसक्तिं(स्वत्वभावं) परित्यज्यं त्यागभावपरायणेन मानसिकसन्तुष्टिरुपलभ्यत इति सुखमार्गो गीतोक्तः। एतावत्तु मानसिकमुक्तम्।

प्रतिपदं जनानां मनसि विषयेषु आसक्तिः स्वाभाविकी एव। यत्क्रमतो बृद्धिं गत्वा महद्दुःखस्य कारणं भवति । विषयोपभोगो महत्सुखमिति भ्रान्त्या निपतितोऽसहायोमानवः स्वयं निजविघ्नान् जनयति । वस्तुतः आकर्षितवस्तुनां रमणेन यत् क्षणिकं सुखं तन्न सुखम्, यतोहि किञ्चित्क्षणादनन्तरं पुनस्तत् दुःखजाले निपातयति । अतः चिरकालं प्रवर्तमानं यत् सुखं तद्वास्तविकमिति विदुषामभिप्रायः। तस्मादुच्यते आङ्ग्ले – **Meet to everyone, but don't get attach with anyone.** समाजे जनानां जीवनशैली विचारशैली च क्रमेण परिवर्तमाना भवति । सामाजिकप्रगतौ एकं सुस्थं जीवनं यापयितुं सामर्थ्यं सहाय्यञ्च नितरामपेक्षते । कर्ममयजीवने नीरोगता विशिष्टां भूमिकां निर्वहति। निरोगतायाः कारणम् भवति अनुकूलजागतिकव्यवहारः, प्रकृत्यनुकूलदिनचर्य्या च। तदाधारतया प्रथितानां लोकाचार-व्यवहाराणां संसर्गेण यो व्यवहारिकानन्दः क्रमेण आलोच्यते। येषाम् अपेक्षा अस्मिन् प्रद्यौगिककाले विशेषतयानुभूयते। व्यापारचेष्टायां दिनव्यापी या प्रवृत्तिरद्य मानवानामवश्यं विचारणीया भवति । लोकहिताय शयन-जागरणादि नियमः, व्यवहारकुशलतादि च जनैरधुना उद्योगरज्जुना निवन्धितः, अवहेलितश्च । अत एव सर्वेषां हिताय कुशलव्यवहारोऽवश्यं स्मर्तव्यः -

**ब्राह्मे मुहूर्त उत्तिष्ठेत्स्वस्थो रक्षार्थमायुषः।**[27]

रात्रेश्चतुर्दशो मुहूर्तो ब्राह्मो मुहूर्तः, रात्रेश्चतुर्घटिकावशेषे समुत्थानं कार्यमिति स्थितम् । स आयुषो यथोपचरितस्य जीवितस्य रक्षार्थं ब्राह्मे मुहूर्ते उत्तिष्ठेत्। सूर्योदयात्प्रागभ्युत्थानं कुर्यात् इत्यर्थः।

---

[26] श्रीमद्भगवद्गीता.12.12

[27] अ.हृ.सू.2.1

**सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः।**
**सुखं च न विना यस्मात्तस्माद्धर्मपरो भवेत् ।।**[28]

सुहितं खेभ्यः(इन्द्रियेभ्यः) सुखमिति सुखस्य विंशतिः नामानि वदति यास्कः। सर्वभूतानां यस्मात्सुखार्थाः प्रवृत्तयः अभिप्रेताः, शर्माख्यं सुखं च विहितमस्ति। धर्माद्विना तन्न सम्भवति। तस्मात्कारणात् धर्मप्रधानं सुखं(इन्द्रिय हितं) चिन्तनीयम्। मानवतायै धर्मप्रधानस्य वैशिष्ट्यं भगवता श्रीकृष्णेन सुष्ठु विचारितम् यत् -

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः।।**[29]

अर्थात् उत्तम आचरणेन साकं पालितेभ्योऽन्यधर्मेभ्यो गुणरहितो निजधर्मः ततोऽधिकमङ्गलकरो भवति। अपि तु स्वधर्मे मरणं वरम्, किन्तु धर्मान्तराचरणं कदापि न पालनीयम्, तत् सदैव भयकारकमेव। यथा चन्द्रस्य शीतलता, सूर्यस्य उष्णता, जलस्य पवित्रता च जनकल्याणविधायकानि भवन्ति तथैव मानवानां बल-बुद्धि-क्षेत्र-सामर्थ्यानुगुणं धर्मे प्रवर्त्तमानत्वं लोककल्याणाय असकृत् निर्दिष्टमस्ति।

जीवने सन्तोषप्रतिष्ठायै सन्मित्रसेवां विधत्ते -

**भक्त्या कल्याणमित्राणि सेवेतेतरदूरगः।**[30]

कल्याणे शुभकर्मणि यानि ज्ञानादिकमुपदिशन्ति लोकद्वयहितैषीणि वृद्धगुरुब्राह्मणादीनि प्रकृष्ट मित्राणि भवन्ति। तानि मित्राणि अदम्भमतिः सन् सेवितव्यानि। कल्याणमित्रापेक्षया इतराणि पापमित्राणि(कुबुद्धियुक्तानि) दूरतो वर्जनीयानि। विरुद्धमत्युत्पादकानि अवश्यं वर्जनीयानि।

---

28 अ.हृ.सू.2.20

29 श्रीमद्भगवद्गीता.3.35

30 अ.हृ.सू.2.21

**हिंसास्तेयान्यथाकामं पैशुन्यं परुषानृते ।।**
**सम्भिन्नालापं व्यापादभिध्यां दृग्विपर्ययम् ।**
**पापं कर्मेति दशधा कायवाङ्मानसैस्त्यजेत् ।।**[31]

प्राण्युपघातो हिंसा। स्तेयं चौर्यम्। अन्यथाकाम– निषिद्धकामसेवा पशुस्त्रीगुरुदारगमनादि। एतत्त्रिविधं कायिकं पापं कर्म। परेषां भेदकृद्वचनम्– पैशुन्यम्। अमृदुवचनं परुषं। असत्यवचनम्– अनृतम्। असम्बद्धप्रलपनं– सम्भिन्नालापः। चतुर्विधमेतद्वाचिकम्। प्राण्युपघातचिन्ता – व्यापादः। परगुणाद्यसहिष्णुता विषयस्पृहा वा – अभिध्या। शास्त्रदृष्टिवैपरीत्यं नास्तिकत्वादि। त्रिविधमेतत् मानसम्। तदेतद्धिंसादि दशधा पापं कर्म कायवाङ्मानसैः त्यजेत्। तन्न कुर्यादित्यर्थः। एतेभ्यो दशविधेभ्यो बुद्धिं दूरे संस्थाप्य **सर्वे भवन्तु सुखिनः** इति वैश्विकसंङ्कल्पस्य पराकाष्ठांस्तथा मनविकताया महत्वम् आवहेत्।

**अवृत्तिव्याधिशोकार्ता ननुवर्तेत शक्तितः।**[32]

न विद्यते वृत्तिर्येषां तानवृत्तीन् यथाशक्तिम् अनुकूलं व्यवहरेत्। इष्टवियोगजं दुःखमिति स्वाभाविकमेव । वस्तुतः प्रस्तुते काले एषा स्थितिरत्यन्तम् असहनीया वर्तते एव । विविधक्षेत्रे वृत्ति(जीवनजीविका)निमित्तं स्वाभिभावकानां स्वप्नं सफलीकर्तुं वा नितरां चेष्टापरायाणाः अद्य नवप्रतिभावन्तः युवानः स्वाच्छन्द्येन समाजिकसुखसारणीम् अभित्यजन्ति, ततोऽपि उद्योग-वृत्तिं विना परेषां परुषवचनेन यत्किञ्चित् स्वात्माभिलाषम् आनन्दं विदग्धीकुर्वन्ति च। एकस्य प्रयतमानस्य अनुत्तिर्णे सति इतरैः निन्दा-तिरस्कारं न कर्त्तव्यम्। तस्मिन्नेव परिस्थितौ व्याधिना शोकेन वा सन्तप्तानां आर्तिनिवारणे प्रयतेत। काव्यदर्पणमपि अस्मान् (समाजं) तमेव चित्रं दर्शयति – आपन्नार्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम्।[33] अर्थात् विषादग्रस्तानां जनानां दुःखमपनोदनमेव महज्जनानां सम्पद् भवति। न केवलं सन्तप्तानामार्तिनिवारणम् अपि तु भूतदयां विधत्ते –

---

31 अ.हृ.सू.2.21.22

32 अ.हृ.सू.2.23

33 मेघ. उत्तर.56

**आत्मवत्सततं पश्येदपि कीटपिपीलकम् ।**[34]

सर्वभूतान् कीटान् पिपीलिकादींश्चापि आत्मवत्पश्येत्। स्वशरीरतुल्यमेव। अत्र पिपीलिकामिति कथनेन सर्वोऽपि क्षुद्रजन्तवः इत्यर्थावधेयः। किं पुनः ब्राह्मणादिकमिति आशङ्कायां तत्र 'आत्मनः प्रतिकूलानि परेषां न समाचरेत्' इत्यर्थो बोधव्यः।

**अर्चयेद्देवगोविप्रवृद्धवैद्यनृपातिथीन् ।**[35]

दीव्यन्तीति देवा विष्ण्वादयः। वेदोक्ता विश्वायुः, विश्वकर्मा, विश्वधायेति गोमातरः। वेदाध्येता सकलकल्याणचेतः ब्राह्मणः विप्रः। श्रुतादिभिरात्मनोऽधिका ज्ञान-शील-तप-वयोवृद्धाः। प्रजारक्षको राजा नृपः। असमानग्रामी वैश्वदेवान्ते/पर्वान्ते/कार्यान्ते/सेवान्ते समुपस्थितः अविद्यमाना तिथिः आगत्य गच्छतीति वा अतिथिः। एतेषां पूज्यपूजां सप्रेमं कर्त्तव्यमिति सुखनिर्देशः। ब्राह्मणस्य पूजा किमर्थं कर्त्तव्येत्यत्र प्रसङ्गे भीष्मः युधिष्ठिराय राजधर्मोपदेशकाले सकारणं पूज्यपूजायाः माहात्म्यं कथयति -

**अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।**
**तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ।।**
**अयो हन्ति यदाश्मानमग्निना वारि हन्यते ।**
**ब्रह्म च क्षत्रियो द्वेशि तदा सीदन्ति ते त्रयः।।**
**एवं कृत्वा महाराज नमस्या एव ते द्विजाः।**
**भौमं ब्रह्म द्विजश्रेष्ठा धारयन्ति समर्चिताः।।**[36]

जलात् अग्निः, ब्राह्मणात् क्षत्रियः, अश्मनः लोहम् इत्तेतत् त्रयाणामुत्पत्तिः । अग्निः, क्षत्रियः, लोहञ्च सर्वत्र स्वाधिकारं प्रभावयितुमर्हन्ति, किन्तु स्व स्व उत्पत्तिभिः साकं सम्पर्के आगत्य त्रयाणां शक्तिः तटस्था भवति (शिथिलीभवन्ति)। (The three, viz., fire, Kshatriya and iron, can act on every other things, but coming into contact with their respective

---

[34] अ.हृ.सू.2.23

[35] अ.हृ.सू.2.24

[36] महा. शान्ति. 56.24-26

origins, their force becomes neutralized.) यदा पाषाणो लोहेन हन्यते, वारि अग्निना हन्यते एवञ्च क्षत्रियेण ब्राह्मणः प्रताड्यते तदा ते त्रयः क्षीणत्वं यान्ति । अतः हे राजा! वेदोपदेशानां प्रचारकाः तथा श्रेष्ठतमकर्मणां च विधिवत् अनुष्ठातारो ब्राह्मणाः चिरनमस्या भवन्ति ।

परिस्थित्यनुगुणं विमुखीकरणं, अवज्ञा, परुषभाषणमिति त्रिविधं याचकद्वेषं निषेधति -

**विमुखार्थिनः कुर्यान्नावमन्येत नाक्षिपेत् ।**[37]

आर्थिनो वा याचकान् प्रत्याख्यानेन विमुखान् न कुर्यात्। नावमानयेत् नापमानयेच्च। अपि च परुषवाचादिना आक्षेपं न कुर्यात्, एवमाक्षेपादिना याचकस्य हृदि कुठाराघातं भवति यत् परोक्षेण आत्माघातं सूचयति अतः सदाचारयुक्तो वाग्विन्यासः सर्वदा सर्वहितं जनयति तस्मात् लोके सत्पुरुषाणाम् उक्तिः सर्वदा ग्राह्या पूजनीया च भवति।

**उपकारप्रधानः स्यादपकारपरेऽप्यरौ ।**[38]

अरौ नाम शत्रोः अपकारपरे अपि सति उपकारप्रधानः स्यात्। ननु रिपुरपकारक एव, तर्हि तत्किमपकारपर इति विशेषणेन, सन्दग्धौ माघः वक्ति –

**उपकर्त्रारिणा सन्धिर्न मित्रेणापकारिणा।**
**उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः।।** [39]

उच्यते न हि सर्वदैवारिरपकारं कर्तुं शक्यः स्यात्, किं तर्हि कदाचिदेव। हेत्वाद्यधीनत्वादपकारकारित्वस्य। वातादिदोषवत्। यथा वातादयो हि दोषा दूषणस्वभावा अपि सन्तः कदाचिद्विकारकारित्वे समर्था भवन्ति कदाचिन्नैव। दोषत्वं तु सर्वदैव तेषाम्। तस्मात् अपकारपर इति युक्तं विशेषणम्। अपकारिण्युपकारकृत्स्यात्।

---

[37] अ.हृ.सू.2.24

[38] अ.हृ.सू.2.25

[39] शिशु. सर्ग.2.37

**सम्पद्विपत्स्वेकमना, हेतावीर्ष्येत्फले न तु ।।**[40]

सम्पत्सु विपत्सु च समचित्तः(एकमना) भवेत्। अनुकूले अत्यन्तहर्षेण प्रतिकूले च विषादादिना न भाव्यमित्यर्थः। यथा अयमेव श्रुतत्यागादिगुणवान् कस्मात् कस्मादपि अहमेवं न भवेयम् इति मनोनिश्चयः करणीयः। परकीये शोभने फले वस्त्रालङ्कारादिके अपि इच्छा ईर्ष्या च न कार्या। यतोहि उच्यते – परोत्कर्षासहनमीर्ष्या। यो हि बुद्धिमान्, स स्वप्रचेष्टया फलसाधने ईर्ष्येत्, न तु फले। एतदुक्तं भवति– एकं साधनमुद्दिश्य तत्साधनमनुतिष्ठद्भिः परस्परेर्ष्ययाऽनुष्ठेयम्। तथाह्यनुष्ठितं कर्म सम्यगाशु निष्पद्यते। अतो दैवानुकूल्यादेकस्य फले सिद्धे, तत्रेतरैरीर्ष्या न कर्त्तव्या। सा हि न फलस्य साधनम्, प्रत्युत पापपरितापयोरिति।

अग्रे भाषणव्यवहारेण सुखप्रतिष्ठामाचष्टे -

**सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात्सत्यमप्रियम् ।**
**प्रियञ्च नानृतं ब्रूयादेषो धर्मः सनातनः ।।**[41]
**काले हितं मितं ब्रूयादविसंवादि पेशलम्।**[42]

कठोरसत्यवचनेनापि प्रहारवत्कष्टमुत्पद्यते अतः कथनात्प्रागेवावधेयः। प्रस्तावे काले विवक्षितार्थप्रकाशनमात्रम् हितं सत्यं मधुरं मनोज्ञञ्च कथयेत्। अत्र पेशलशब्दस्य मनोज्ञो मधुरार्थे प्रयोगः।

**पूर्वाभिभाषी, सुमुखः सुशीलः करुणामृदुः।**[43]
**नैकः सुखी, न सर्वत्र विश्रब्धो, न च शङ्कितः।।**

विशेषमाचष्टे – यदृच्छया सङ्गते सहृदि तद्वचनात्पूर्वं कुशलप्रश्नादिकारी भवेत् । तथा सुमुखः प्रसन्नवदनः, शिष्टानुमतव्यवहारवान्सत्यपि सामर्थ्ये कृपालुत्वात्परापकारसहिष्णुः सुखसम्पर्कस्य

---

40 अ.हृ.सू.2.25

41 मनु.4.138

42 अ.हृ.सू.2.26

43 अ.हृ.सू.2.26

चिह्नानि भवन्ति । यथा करुणया मृदुरार्द्रसन्तानो मातेव पुत्रे भवति । कदापि एकोऽद्वितीयो जनः सुखी न स्यात् । ज्ञातिभृत्यादिभ्यो यथायथमविभज्य सुखसाधनं नोपयुञ्जीत । तथा सर्वस्मिन् विश्रब्धो(विश्वासः) न स्यात् । सर्वस्मिन् सङ्कामपि न कुर्यात् । यतोहि अविश्वसनीयेषु विश्वासस्तथा अशङ्कनीयेषु शङ्का च विपत्तेः कारणमिति सर्वजनविदितमेव ।

**न किञ्चिदात्मनः शत्रुं नात्मानं कस्यचिद्रिपुम् ।**
**प्रकाशयेन्नापमानं न च निस्नेहतां प्रभोः ।।**[44]

आत्मनो नाम स्वस्यापकारीं शत्रुं कश्चिदपि न प्रकाशयेत् एषो मम शत्रुरिति । एवञ्च अहमस्य वैरीति आत्मानमपि कस्यचिद्रिपुं न प्रकाशयेत् । तथा अपमानं, कुतोऽपि जातं तिरस्कारमपि कस्मै न ब्रूयात् । तथा प्रभोः स्वामिनः निस्नेहतां न प्रकटयेत् । मां प्रति स्वामी सम्प्रति निःस्नेह इति कुत्रापि नोच्चारयेत्। यतोहि तत्प्रकाशनादसौ प्रभुर्जातावसरैः भेदकैः सुतरां निःस्नेहीक्रियते ।

**जनस्याशयमालक्ष्य यो यथा परितुष्यति।**
**तं तथैवानुवर्तेत पराराधनपण्डितः।।**[45]

लोकस्याभिप्रायं बुद्ध्वा यो यथा परितुष्यति परसन्तोषोत्पादनप्रकारेषु सुनिश्चितो भूत्वा तेनैव प्रकारेण दानप्रियवचनादिना तमाराधयेत् इत्यर्थः। विशिष्टमुदाहरणं रामायणे -

**मन सन्तोषे सबन्हि के जहँ तहँ देहिं असीस ।**
**सकल तनयचिर जीवहुँ तुलसिदास के ईस ।।**[46]

महाराजदशरथः समेषां प्रजानां मनोरथं तोषितवान्। सन्तोषकारणात् सर्वाः प्रजाः दशरथं आशीर्वचनेन पोषयामासुः यत् हे राजन्! सतनयस्त्वं दीर्घजीवी बहुप्रतिष्ठायुक्तो भव इति।

---

[44] अ.हृ.सू.2.27

[45] अ.हृ.सू.2.28

[46] बालकाण्ड.196

**न पीडयेदिन्द्रियाणि न चैतान्यति लालयेत् ।**[47]

कुत्सितभोजनादिना रसनादीनि इन्द्रियाणि न पीडयेत् । अर्थात् कदन्नादि द्वारा इन्द्रियादीन् न निन्दयेत् । न गृह्णीयाद्वा । न च एतानीन्द्रियाणि अतिशयेन विलाशयेत् ।

**त्रिवर्गशून्यं नारम्भं भजेत्तं चाविरोधयन् ।**[48]

यस्मिन् धर्मार्थकामेति त्रिवर्गं न सिद्ध्यति तत्रोद्यमं न कुर्यात् । यदि वर्गद्वयम् एकं वा सिध्यति तर्हि उद्यमं शुभकरं, परन्तु यदि एकमपि न सिध्यति तदा किंशुके जलसेचनमिव । अर्थात् आशाभङ्गः, निराशाय भवति, तत्र उद्यमं न विधातव्यमेव ।

**अनुयायात्प्रतिपदं धर्मपदेषु मध्यमाम् । ।**[49]

सर्वेषु धर्मेषु सर्वेषु आचारेषु वा सदा मध्यमं मार्गमनुवर्तेत । न कत्रासक्तिं कुर्यात् । सर्वेष्वात्मकृत्येषु रागद्वेषरहितां बुद्धिमनुसरेत् ।

**धारयेत्सततं.. मन्त्रमहौषधीः ।**[50]

मन्त्रो गायत्र्यादिः । प्रकृत्यनुकूला महौषधीः । सुवर्णरत्नादिर्बाहुग्रीवादिषु सततं धारयेत् । मन्त्रादींश्च प्रजपेत् । अनेन अन्तःमानसिकस्तृप्तिश्च जायते ।

**सातपत्रपदत्राणो विचरेद्युगमात्रदृक् । ।**[51]

चतुःपार्श्वं हस्तचतुष्टयम् अवलोकयन् बहिः मार्गे गच्छेत् । एवं कुर्वन् सम्मुखमागच्छद्भिः गवाश्वादिभिः यानादिभिर्वा नोपद्रूयते । छत्रेण पदाधारपर्यायेण वा गमनेन द्वन्द्वोपद्रवेभ्यः स्वात्मानमभिरक्षेत् ।

---

47 अ.हृ.सू.2.28

48 अ.हृ.सू.2.30

49 अ.हृ.सू.2.30

50 अ.हृ.सू.2.32

51 अ.हृ.सू.2.32

**निशि चात्ययिके कार्ये दण्डी मौली सहायवान् ।**[52]

यत्कार्यं कालप्रतीक्षां न सहते तदात्ययिकम्। रात्रौ तस्मिन्सति गमनकाले हस्ते दण्डादियुक्तः सन् गच्छेत्। मौलिः शिरोवेष्टनम् शिररक्षार्थमुक्तम्। रात्रौ मौलिः(शिरोवेष्टनम्) इत्यत्र न केवलं तावानर्थमात्रपरम्, अपि तु प्रस्तुते काले यानवाहनस्य व्यवहारप्राचुर्यात्, यानेन गमनवेलायां मौलिधारणं (use Helmet while driving) इत्यर्थमपि प्रासङ्गिकतामेति। अतोऽवश्यं जागरणेन भाव्यम्।

लोकादेव आर्चारशिक्षां विधत्ते -

**आचार्यः सर्वचेष्टासु लोक एव हि धीमतः।**
**अनुकुर्यात्तमेवातो लौकिकेऽर्थे परीक्षकः।।**[53]

यस्मात् बुद्धियुक्तस्य पुरुषस्य सर्वत्र लोक(समाजः) एव शिक्षकः। अतोऽस्मात् लौकिके अर्थे परीक्षकः पुरुषस्तमेव लोकमनुकुर्यात्। प्रति परिवारं, विशेषतः अध्ययनप्रगतौ इदानीं प्रतिविभागम् आचारः, व्यवहारः,शैली, संस्कारश्च भिन्नं भिन्नं दृश्यते। शिक्षणे भिन्नतायाः परिणामः विचारवैभिन्यं जनयति तथा विचारानुरोधेन व्यवहारशैली अपि असमाना भवति। सौमनस्यं पदम् अत्र प्रश्नवाची भवति। अत एव यत्र कुत्रापि भवतु नाम, अस्माकम् आचरणं यथा सदाचारयुक्तं भवति तथैव भवेदित्याशयः। यदि कश्चित् पुरुषः आनुकूल्येन भावितो बन्धुर्भवति, प्रातिकूल्येन भावितः शत्रुर्भवति, यथा वा भक्ष्यं भोज्यं च विषवत्त्वेन भावितं वमनं करोति, अमृतत्वेन भावितं चेज्जीर्णं सत् बलहेतुर्भवति। तदुक्तं वाशिष्ठरामायणे -

**बन्धुत्वे भावितो बन्धुः परत्वे भावितः परः।**
**विषामृतदशेवेह स्थितिर्भावनिबन्धनी ।।**[54]

[52] अ.हृ.सू.2.33

[53] अ.हृ.सू.2.45

[54] योगवाशिष्ठ.5.20.3

पुनश्च -

**आर्द्रसन्तानता त्यागः कायवाक् चेतसां दमः।**
**स्वार्थबुद्धिः परार्थेषु पर्याप्तमिति सद्व्रतम् ।।**[55]

सर्वसत्त्वेषु कृपालुत्वमिति आर्द्रसन्तानता पदेन ज्ञायते। यथा अयमेव स्वार्थो यः परार्थ इत्युभयलोकहितत्वम् एव परप्रयोजनेषु स्वार्थबुद्धिः। सर्वदा कायवाक्चेतसां दमनं कृत्वा कृपालुस्वभावः सन् त्यागे(दानकर्मणि) प्रीतो जनः लोके सर्वकालं शोभते। अयमेव स्वार्थो यः परार्थ इत्येवं प्रकारं चिन्तनं सद्व्रते अन्तर्निहितं भवति। यद्व्रतं पुरुषस्य चारित्र्यं संबर्धयत्येव। एवमेव सदाचारोपदेशः शास्त्रेषु कृतो वर्तते। भारतीयज्ञानपद्धतौ सदाचारसम्पन्नशिक्षापद्धतेः कला-संस्कृतेश्च वैशिष्ट्यं युगे युगे प्रशंसितमेव। पूर्ववद् अस्माभिरपि सा शिक्षा दीक्षा अनुसर्त्तव्या।

रात्रिदिनानि सम्प्रति कीदृशस्य सतः यान्ति एवं नित्यं सन्निहितस्मृतिः दुःखभाक् न भवतु। अतः ईशावास्यमिदं सर्वं यत्किञ्चिज्जगत्यां जगत् इति दिव्यचेतना जनमानसे सञ्चरतु। सर्वेऽपि प्राणीनः परस्परं भावयन्तः परोपकारिणः भवन्तु, सेवाधर्मभावनया सानन्देन दीर्घमयं जीवनं यापयन्तु, आदर्शचरित्रैः विभूषिताः सन्तः अन्येभ्यः उदाहरणयोग्या भवन्तु इति **सर्वे भवन्तु सुखिनः** इत्यभिलेखान्तर्गतो मे आशयः।

**<u>सन्दर्भग्रन्थाः</u>**


- अष्टाङ्गहृदयम् –सूत्रस्थानम् (अ.हृ. सू): अम्णा मोरेश्वर कुण्टे, वाराणसी,चौखम्बा संस्कृत संस्थान, 2015
- ऋग्वेद (ऋक्.): स्कन्दस्वामी-वेङ्कटमाधव-सायणभाष्यसमेता, डा. वि.आर् शर्मा, वैदिक संशोधन मण्डल, पुणे-37, 1988
- कठोपनिषद्(कठ.) : चौखम्बा संस्कृत संथान, वाराणसी, 1994
- चरकसंहिता(च.सं.): जादव त्रीकमजी. वाराणसीः चौखम्बा संस्कृत संस्थान 2004
- चर्य्याचन्द्रोदयः: लक्ष्मीवेङ्कटेश्वरः, मुम्बई, कल्याण मुद्रणालय, 1958।
- बृहदारण्यकोपनिषद् : मेहरचन्दलछमणदासपब्लिकेशन्स्, 2009
- मनुस्मृतिः(मनु.): केशव किशोक काश्यप, वाराणसी, चोखम्बा कृष्णदास अकादमी, 2007


[55] अ.हृ.सू.2.46

- महाभारत -शान्तिपर्व(महा. शान्ति.) : एम्.एन्.दत्त देहली, परिमल पब्लिकेशन्, 2013
- मेधदूतम्(मेघ.) : प्रमोद कुमार पाढी, कटक, किताव महल, 2016
- संस्कृतवाङ्गय में वर्णित भारतीय संस्कृति एवं कला : रेखा शुक्ला, आरधना ब्रदर्स, कानपुर, 2017
- श्रीरामचरितमानस(रा. मा) : हनुमानप्रसाद पोद्दार, गोरखपुर, गीताप्रेस, 2063 संवत्
- श्रीमद्भगवद्गीता(भ.गी.) : गीतोप्रेस, गोरखपुर, 2016
- स्वस्थवृत्तम्(स्व.वृ.): के एस्. महेशकर, मुम्बई, निर्णयसागर प्रेस्. 1954

# संस्कृतव्याकरणे पारिभाषिकशब्दानामध्ययनम्

1. **Md. Zabir Alam**,
Research Scholar,
Raiganj University

2. **Atanu Adhya**
Assistant Professor
Raiganj University

**शोधसारः**

**'संस्कृतव्याकरणे पारिभाषिकशब्दानामध्ययनम्'** इति शोधविषयोऽस्ति, अत्र मया प्राक् संस्कृतस्य, संस्कृतव्याकरणस्य च स्वरूपमालोच्य पारिभाषिकशब्दानां वर्गीकरणानन्तरं प्रकृतिः, प्रातिपदिकम्, धातुः, आदेशः, आगमः, वृद्धिः, प्रत्ययः, विभक्तिः, पदं प्रभृतयः संस्कृव्याकरणपारिभाषिकशब्दाः प्रतिपादितमिति।

**संकेतसूची-** उपक्रमः, संस्कृतव्याकरणस्वरूपम्, परिभाषायाः व्युत्पत्तिः, पारिभाषिकशब्दानां वर्गीकरणम्।

**उपक्रमः**

**'जगत्यस्मिन् भावस्य वाहिका भाषा उच्यते'** इति अस्माकं परम्परा विद्यते। भाषा हि सर्वेषां सर्वश्रेष्ठनिधिरस्ति । भाषां विना इह जगति जनाः न किमपि कर्तुं शक्नुयुः, अस्य च जगतः जनानां मानवानां वा विचाराः भाषया एव प्रसरन्ति। पुनः ईयं भाषा तु नः सांस्कृतिक-सामाजिक-व्यवहारस्य च माध्यमरूपा वर्त्तते। अतएव एतदर्थम् आचार्यदण्डिः तस्य काव्यादर्शनामके ग्रन्थे उच्यते-

**"इह शिष्टानुशिष्टानां शिष्टानामपि सर्वथा।**
**वाचामेव प्रसादेन लोकयात्रा प्रवर्तते ।।**[1]"

मानवजातेः अभ्युदयविकाशप्रगतयः भाषां विना नैव सम्भवति। इह जगति च वर्तमाना व्यवहाराः ते सर्वेऽपि भाषानुपातिन एवेति प्रत्यक्षानुभवेन सिद्धमिति। उक्तं च

वाक्यपदीये -

**“न स अस्ति प्रत्ययो लोके यच्छव्दानुगमादृते ।**
**अनुबिद्धमिव ज्ञानं सर्वं शब्देन भाषते।।**[2]

यतोहि भाषा सर्वेषां सर्वश्रेष्ठनिधिरस्ति, तथाहि इयं भाषाज्योतिः यदि न स्यात्तदा समग्रमिदं भुवनत्रयमज्ञानान्धकारेण परिव्याप्तं स्यात्। विषयेऽस्मिन् दण्डिः तस्य काव्यादर्शे उक्तवान्-

**इदमन्धतमः कृत्स्नं जायेत भुवनत्रयम् ।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ।।**[3]

पुनः भाषा तदा एव कालजयी भवति यदा अस्याः भाषायाः एकं सुसमृद्धं व्याकरणं वर्त्तते। यष्टिं विना पङ्गुव्यक्तेः यादृशी अवस्था जायते, तथैव व्याकरणं विना भाषायाः तादृशी अवस्था जायते। इदं व्याकरणं तु अरपाविद्या । वेदात् एव अस्य व्याकरणस्य उत्पत्तिरभवत्। अतः अस्य वेदस्य षड् अङ्गानि सन्ति तेषु षडाङ्गेषु व्याकरणं प्रधानं विद्यते। इदं च व्याकरणम् अपराविद्या।

**संस्कृतव्याकरणस्वरूपम्**

**‘सम्’** उपसर्गपूर्वक डूकृञ् करणे धातोः क्तप्रत्यये कृते सति सुडागमे च संस्कृतमिति शव्दः निष्पद्यते। यस्यार्थः भवति सम्यक् कृतं संस्कृतमिति। इह जगति याः भाषाः प्रचलिताः सन्ति, तासु सर्वासु भाषासु संस्कृतभाषा सर्वोत्तमा वर्त्तते। संस्कारयुक्ता, दोषरहिता परिष्कृता भाषा एव संस्कृतभाषा कथ्यते। इयमेव भाषा देवभाषा, अमरगिरा, सुरभारती, देववाणी, सुरवाणी, गीर्वाणवाणी अपि उच्यते। एभिरपि अस्याः भाषायाः महत्त्वं परिवर्धते।

व्याक्रियन्ते व्युत्पाद्यन्ते शव्दाः अनेनेति व्याकरणम्। अर्थात् वि, आङ् चेति उपसर्गपूर्वकं डुकृञ् करणे ल्युट् प्रत्यये कृते व्याकरणमिति पदं निष्पद्यते। यद्यपि तैत्तिरीयसंहितायां व्याकरोत् इत्यनेन पदेन व्याकरणस्य मूलस्वरूपस्य प्रयोगः दृश्यते, तथापि

प्रायशः व्याकरणपदस्य सर्वप्रथमप्रयोगः निरुक्तग्रन्थे एव समुपलभ्यते। अस्य व्याकरणपदस्य अपरनाम विद्यते शव्दानुशासनमिति। अनुशासनं नाम अनुशिष्यन्ते असाधुशव्देभ्यो विविच्य वोध्यन्ते इति अनुशासनम्। शव्दानाम् अनुशासनं शव्दानुशासनम्। "कर्तृकर्मणोः कृति"[4] इत्यनेन सुत्रानुसारेण इह षष्ठी, करणार्थे ल्युट् प्रत्ययः चेति।

**परिभाषायाः व्युत्पत्तिः**

परिभाषातः आगतं पारिभाषिकमिति। परिभाषाशब्दात् ठञ् प्रत्ययेन पारिभाषिकमिति शब्दः निष्पद्यते। यस्यार्थः भवति - परिभाषार्थबोधकं पदमिति।

**पारिभाषिकशब्दानां वर्गीकरणम्**

पाणिनिना पारिभाषिकशब्दानां विशिष्टवर्गीकरणं नैवविहितम्। अयं तु स्वकीयाष्टाध्याय्यां सूत्राणि निर्मातुं परिभाषासूत्राणां निर्माणमकार्षीत्। परिभाषासूत्राणां संख्याप्रायशः पञ्चाशत् वर्तते। व्यवहारिकक्षेत्रे व्याकरणेतरशास्त्रे च परिभाषाशब्दः स्वरूपपरिचायकत्वेन प्रयुज्यते। पारिभाषिकशब्दाः द्विधा विभक्ताः सैद्धान्तिकः मौलिकश्चेति। पुनः केषाञ्चन्- आचार्याणां मते पारिभाषिकपदानि भिन्नप्रकारैः विभज्यते, तद्यथा

1. स्वव्याख्यानपदानि यथा लोपः, ह्रस्वः, दीर्घः, सर्वनाम् इत्यादीनि।

2. शास्त्रप्रसिद्धानि किन्तु प्रक्रियादशायां भिन्नार्थकानि यथा- नदी, गुणः, वृद्धिः इत्यादीनि।

3. कृत्रिमपदानि पदस्य च व्याकरणशास्त्रभिन्ने कार्ये अर्थो नास्ति तद्यथा- टि, घु, भ इत्यादीनि। अतः सम्प्रति पारिभाषिकशब्दाः संक्षेपेण प्रस्तूयते—

**1. प्रकृतिः** - मूलशब्दरेव प्रकृतिरूच्यते। प्रकृतेः पश्चाद् प्रत्ययं संयुज्य पदं निष्पद्यते। कातन्त्रव्याकरणे उक्तं यत् प्रत्ययाद् प्रथमं क्रियते इति प्रकृतिः। प्रकृतिः द्विधा विभज्यते, यदुक्तमस्ति-

**"निरुक्ता प्रकृतिर्द्वेधा नामधातुप्रभेदतः।**
**यत् प्रातिपदिकं प्रोक्तं तन्नामो नातिरिच्यते ।।"[5]**

**2. धातुः** - यत्प्रकृतिः क्रियावाचिका तत् धातुः। "भूवादयो धातवः"[6] इत्यनेन सूत्रेण पाणिनिः धातोः स्वरूपमाह, यस्यार्थः क्रियावाचिनो भूवादयो धातुसंज्ञः स्युः। एतदतिरिक्तं "सनाद्यन्तः धातवः"[7] इति सूत्रेणापि पाणिनिना धातुसंज्ञा विधीयते।

**3. प्रातिपदिकम्**- क्रियावाचकभिन्नप्रकृतिरेव प्रातिपदिकम्। प्रतिपदं भवम् इति प्रातिपदिकम्। प्रातिपदिकेव नाम[8] इति। ऋग्वेदप्रातिशाख्ये प्रातिपदिकसमानार्थकनामपदं दृश्यते[9]। नामविषये यास्केन निगदितं यत् 'सत्त्वप्रधानानि नामानि' अर्थात् नाम सत्त्वप्रधानम्। सत्त्वम् लिङ्गसंख्ययोः सद्भावः एव। यथा चन्द्रः, जलम्, वायुः इत्यादयः। पाणिनिनाऽपि सूत्रद्वयेन प्रातिपदिकसंज्ञं कृतम्, तद्यथा "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्"[10] अर्थात् धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वाऽर्थवच्छब्दस्वरुपं प्रातिपदिसंज्ञं स्यात् एवं च "कृत्तद्धितसमासाश्च"[11] कृत्तद्धितान्तौ समासाश्च प्रातिपदिकसंज्ञाः स्युः। प्रातिपदिकशब्दः पारिभाषिकशब्दरूपेण प्रथमं गोपथब्राह्मणे उपलभ्यते यथा 'किं प्रातिपदिकं किं नामाख्यातम्'[12] इति।

**4. प्रत्ययः** - येनार्थः प्रतीयते सः प्रत्ययः, अर्थात् यस्य संयोगेन प्रकृतिः अर्थप्रकाशयति सः प्रत्ययः। धात्ववयवोऽपि प्रत्ययविशेषः। जगदीशतर्कालंकारेण शब्दशक्तिप्रकाशिकायाम् उक्तम् "विभक्तिधात्वंशकृद्भ्योऽन्यः प्रत्ययस्तद्धितः"[13], अतः प्रत्ययाः पञ्चविधाः यथा कृत्-तद्धित-स्त्री-धात्वावयवाः चेति। अथर्ववेदप्रातिशाख्ये "यकारलोपः प्रत्ययान्तरं वा" [14] इति प्रत्ययशब्दस्य प्रतिपादनं क्रियते। "प्रत्ययः"[15], "परश्च"[16] इति सूत्रद्वयेन पाणिनि प्रत्ययसंज्ञा विधीयते। पुनः "प्रत्ययः परः"[17] इत्यनेन कातन्त्रव्याकरणे प्रत्ययसंज्ञा विधीयते।

**5. विभक्तिः**- पञ्चप्रत्ययेषु सुप्तिङौ विभक्तिसंज्ञौ स्तः। विभक्तिसम्बन्धे दुर्गासिंहेनोक्तम् - अर्थस्य विभञ्जनाद् विभक्तिः इति, अर्थात् विभज्यन्ते पृथक् क्रियन्ते कर्तृकर्मादयः यया सा विभक्तिः। अतएव विद्यासागरोऽपि विभक्तिविषये उक्तवान्- 'संख्याकारकबोधयित्री

विभक्तिः'[18] इति। विभक्तिशब्दः पारिभाषिकशब्दरूपेण गोपथब्राह्मणे सर्वादौ प्रजुज्यते। "विभक्तिश्च"[19], "प्राग्दिशो विभक्तिः"[20] इति सूत्रद्वयेन पाणिनिना विभक्तिसंज्ञा विधीयते।

**6. पदम्** - पद्यते गम्यतेऽनेनेति पदम्, पद्यते नाम गच्छति बोधयति अर्थमिति यत् तद् इति व्युत्पत्यनुसारेण गत्यर्थक पद् धातोः "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः"[21] इत्यनेन अच् प्रत्ययेन पदम् इति रूपं सिद्धम्। 'प्रकृतिविभक्तिसाधकत्वं पदत्वम्' अर्थात् धातुः प्रातिपदिकः वा विभक्तियुक्तं भुत्वा पदं भवति । यथा राम-सु = रामः, गम्-तिप्= गच्छति। पाणिनि उक्तं "सुप्तिङ्न्त पदम्"[22] । एतदतिरिक्तं पाणिनि "नः क्ये", "सिति च", "स्वादिष्वसर्व्वनामस्थाने", "तसौ मत्वर्थे", "प्रत्ययलोपे प्रत्ययलक्षणम्", "स्थानिवदादेशोऽनल्विधौ" इत्यादयैः सूत्रैरपि पदसंज्ञा विधीयते। पदम् इति शब्दः प्रथमं ऋग्वेदे दृश्यते।

**7. अङ्गम्** - अङ्ग्यते ज्ञायते वा अनेन इति अङ्गम्। ऋग्वेदप्रातिशाख्यादिग्रन्थेषु अङ्गम् इति शब्दस्य प्रयोगः दृश्यते तद्यथा 'अनुस्वारो व्यञ्जनं चाक्षराङ्गम्'[23] इति। किन्तु पारिभाषिकशब्दरूपेण अयं शब्दः प्रथमम् अष्टाध्याय्यामेव दृश्यते। यथा "यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गम्"[24] इति।

**8. आदेशः** - प्रकृतेः प्रत्ययस्य वा रूपान्तरापत्तिरादेशः। शाब्दिकाः वदन्ति "आदेश उपघाती यः प्रकृतेः प्रत्ययस्य वा" इति। यथा स्था-तिष्ठ्, या-इ इत्यादयः चेति। शत्रुवदादेश इत्यनेन सारस्वतव्याकरणे आदेशसंज्ञा विधीयते। पाणिनिः आदेशशब्दस्य स्वरुपं विना अनेकैः सूत्रैः अस्याः संज्ञायाः प्रतिपादनम् करोति स्म।

**9. आगमः** - वर्णोपस्थितिरागमः। शाब्दिकाः वदन्ति – प्रकृतिं प्रत्ययं चापि यो न हन्ति सः आगमः इति। यथा वनस्पति शव्दे स्, शानच् स्थाने मान प्रत्यये म् इत्यादयः चेति। पुनः मित्रवतादेशः इति श्रूयते।

**10. गुणः** - गुणशब्दः संस्कृतवाङ्मये पारिभाषिकशब्दरूपेण व्यवह्रयते। निरुक्ते उक्तमस्ति "शेव इति सुखनाम्। शिष्यतेर्वकारो नामकरणेऽन्तस्थान्तरोपलिङ्गी विभाषितगुणः।

शेवमित्यप्यस्य भवति" [25] इति। परन्तु तस्य स्वरूपस्य वर्णनं नैव प्राप्यते। गुण्यते असौ इति गुणः। गुणि धातोः "अकर्तरि च कारके संज्ञायाम्" इत्यनेन घञ् प्रत्यये अनुबन्धलोपे गुणः इति पदं सिद्धम्। ऋग्वेदप्रातिशाख्ये एकारस्य गुणसंज्ञा दृश्यते। पाणिनिः अष्टाध्यायां गुणविषयकसूत्रं आह "अदेङ् गुणः" [26] अर्थात् अ-ए-ओ इत्येतयोः गुणसंज्ञा स्यात्।

**11. वृद्धिः** - वर्धनम् इति वृद्धिः। वृध् धातोः "स्त्रियां क्तिन्"[27] इत्यनेन भावे क्तिन्प्रत्ययेन वृद्धिः इति रूपं निष्पन्नं भवति। पाणिनिना "वृद्धिरादैच्"[28] इत्यनेन वृद्धिसंज्ञा विधीयते। "आरूत्तरे च वृद्धिः"[29] इत्यनेन कातन्त्रव्याकरणे वृद्धिसंज्ञा विधीयते।

**12. उपसर्गः** - उप समीपे सृज्यते प्रयुज्यते असौ इति उपसर्गः। उप सृज् घञ् उपसर्गः, "उपसर्गाः क्रियायोगे"[30] अर्थात् प्रादिगणे निर्दिष्टाः शब्दाः क्रियायाः योगे उपसर्गसंज्ञकाः भवन्ति। प्र, परा, अप, सम्, अनु, अव्, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप एते प्रादयः। उपसर्गशब्दस्य पारिभाषिकशब्दरुपेण प्रथमप्रयोगः ब्राह्मणग्रन्थेषु द्रष्टुं शक्यते। यदुक्तमस्ति ऐतरेयब्राह्मणे 'महानाम्नीनामुपसर्गानुपसृजति'[31] इति। निरूक्ते चत्वारि पदजातानि यथा नामाख्यातोपसर्गनिपाताश्चेति। अत्र उपसर्गस्य प्रयोगः दृश्यते। प्रादिरूपसर्गः इति सारस्वतव्याकरणे च उपसर्गसंज्ञा विधीयते।

**13. इत्** - एति गच्छति इति इत्। इण् क्विप् सर्वलोके तुगागमे इत् इति। पाणिनीयपूर्ववैयाकरणाः इत् इति शब्दस्य स्थाने इदनुबन्धशब्दः प्रयुज्यते। यथा काशकृत्स्नव्याकरणे इदनुबन्धान्नुः इति। कातन्त्रव्याकरणे इत्संज्ञा अनुबन्धः इत्यभिधीयते। पाणिनिना "उपदेशेऽजनुनासिक इत्"[32] इत्यनेन सूत्रेण इत्संज्ञा विधीयते। इतोपि "हलन्त्यम्", "लशक्वतद्धिते", "चुटू" चेति प्रभृतेषु सूत्रेषु इत्संज्ञा भवति।

**14. सवर्णम्** - समानः वर्णः यस्य तद् इति सवर्णम्। "तुल्यास्यप्रयत्नं सवर्णम्"[33] इत्यनेन अष्टाध्याय्यां सवर्णसंज्ञायाः प्रयोगः दृश्यते। अर्थात् ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्च इत्येतद्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं भवति। यथा अकुहविसर्जनीयानां कण्ठः अनेन

नियमानुसारेण अ-आ, क-ख-ग-घ-ङ-ह इत्यादयः सवर्णाः। ऋक्प्रातिशाख्ये तु "स्थानप्रश्लेषोपदेशे स्वराणां ह्रस्वादेशे ह्रस्वदीर्घो सवर्णौ"[34] इत्यनेन प्रथमतया पारिभाषिकशब्दरूपेण प्रयुज्यते। 'समासस्थानकरणस्य प्रयत्नः'[35] इति वाचसनेयप्रातिशाख्ये, 'तेषां द्वौ द्वावव्योन्यस्य सवर्णौ'[36] इति कातन्त्रव्याकरणे, 'द्वित्वे परसवर्णः'[37] इति चान्द्रव्याकरणे, 'स स्थानक्रियं स्वम्'[38] इति जैनेन्द्रव्याकरणे, 'स्वः स्थानास्यैक्ये'[39] इति शाकटायनव्याकरणे च सवर्णसंज्ञायाः स्थाने स्वसंज्ञा प्रयुज्यते।

**15. टि** - शब्दस्य अन्तिम-अच्-वर्णादारभ्य शब्दस्य अन्तिमवर्णं यावत् विद्यमानस्य अंशस्य "टि" इति संज्ञा भवति सदुक्तं पाणिनिना "अचोऽन्त्यादि टि"[40] इति। काशकृत्स्नव्याकरणे टिसंज्ञायाः स्थाने अन्त्यस्वरादिशब्दः प्रयुज्यतेतथैवकातन्त्रव्याकरणेऽपि टिसंज्ञायाः स्थाने अन्त्यस्वरशब्दः दृश्यते। "अन्त्याजादिष्टिः"[41] इत्यनेन सारस्वतव्याकरणे टि संज्ञा विधीयते।

**16. नदी** - नदत्वजातिविशिष्टा स्त्री इति नदी। पारिभाषिकशब्दरूपेण नदीशब्दस्य प्रथमप्रयोगः अष्टाध्यायामेव परिदृश्यते। यथा "यूस्त्र्याख्यो नदी"[42] अर्थात् दीर्घ-ईकारान्ताणां-दीर्घ-ऊकारान्ताणां-नित्यस्त्रीलिङ्गवाचकाणाञ्च शब्दानां नदीसंज्ञा भवति। पुनः कातन्त्रव्याकरणे यथा "ईदूत् स्त्र्याख्यौ"[43] इति।

**17. सम्प्रसारणम्** - सम्प्रसार्यते यत् तद् सम्प्रसारणम्। सम् उपसर्गपूर्वकं सारिधातोः "कृत्यल्युटो बहुलम्" इत्यनेन ल्युट् प्रत्ययेन सम्प्रसारणमिति। पाणिनिना "इग्यणः सम्प्रसारणम्"[44] इति सूत्रं विधीयते, अर्थात् यण्-वर्णस्य स्थाने विधीयमानः इक्-वर्णः सम्प्रसारणं नाम्ना ज्ञायते। पुनः "सम्प्रसारणं य्वृतोऽन्तः स्थानिनिमित्ताः"[45] इत्यनेन कातन्त्रव्याकरणे, तथा च "इग्यणो जिः"[46] इत्यनेन जैनेन्द्रव्याकरणे सम्प्रसारणसंज्ञा विधीयते।

**18. विभाषा** - विभाषणम्, विविधं भाषणं वा इति विभाषा। वि उपसर्गपूर्वकं भाष् धातोः "गुरेश्च हलः"[47] इत्यनेन भावे अ-प्रत्यये अनन्तरं स्त्रीलिङ्गविवक्षायां टाप् प्रत्ययेन विभाषा इति रूपं सिद्धम्। विभाषां परिभाषयन् पाणिनिना "न वेति विभाषा"[48] इति सूत्रं कृतम्। अर्थात् वैकल्पिकः निषेधः तथा च वैकल्पिकी प्राप्तिः एतयोः विभाषा इति संज्ञा भवति। निरुक्ते

विभाषाशब्दस्य स्थाने विभाषितशब्दः दृश्यते। "वेति वैभाषिकः"[49] इत्यनेन तैत्तिरीयप्रातिशाख्ये विभाषासंज्ञायाः स्थाने वैभाषिकसंज्ञा प्रयुज्यते। "विभाषाऽन्यत्र"[50] इत्यनेन जैनेन्द्रव्याकरणे, तथा च सारस्वतव्याकरणे "पयसस्तु विभाषया"[51] इत्यनेन विभाषासंज्ञायाः प्रयोगः दृश्यते।

**19. उपपदम्-** उप समीपे उच्चरितं पदम् उपपदम्। वाजसनेयिप्रातिशाख्यादिग्रन्थेषु उपपदशब्दः दृश्यते। किन्तु पारिभाषिकशब्दरूपेण पाणिनिना "तत्रोपपदं सप्तमीस्थम्"[52] इत्यनेन सर्वादौ व्यवह्रियते। "सप्तम्युक्तमुपपदम्"[53] इत्यनेन कातन्त्रव्याकरणे, "कृद्विधौ सप्तमिस्तमुपपदम्"[54] इत्यनेन सरस्वतीकण्ठाभरणे, तथा च जैनेन्द्रव्याकरणे "ईपाऽत्र वाक्"[55] इत्यनेन उपपदसंज्ञा क्रियते।

इत्थं मया प्रभृतयः प्रसिद्धाः व्याकरणस्य पारिभाषिकशब्दाः अत्र संक्षेपेण प्रतिपादिताः।

## तथ्यसूत्राणि

1· काव्यादर्शः 1.3
2. वायुपुराणम् 1.124
3. काव्यादर्शः 1.4
4. पाणिनिसूत्रम् 2.3.65
5. शब्दशक्तिप्रकाशिका
6. पाणिनिसूत्रम् 1.3.1
7. पाणिनिसूत्रम् 3.1.32
8. शब्दशक्तिप्रकाशिका
9. ऋग्वेदप्रातिशाख्यम् 12.18
10. पाणिनिसूत्रम् 1.2.84
11. पाणिनिसूत्रम् 1.2.43
12. गोपथब्राह्मणम् 1.1.24
13· शब्दशक्तिप्रकाशिका
14. अथर्ववेदप्रातिशाख्यम् 2.1.8

15. पाणिनिसूत्रम् 3.1.1
16. पाणिनिसूत्रम् 3.1.2
17. कातन्त्रव्याकरणम् 3.2.1
18. व्याकरणकौमुदी-विभक्तिप्रकरणम्
19. पाणिनिसूत्रम्-1.4.108
20. पाणिनिसूत्रम् 4.3.1
21. पाणिनिसूत्रम् 3.1.134
22 पाणिनिसूत्रम् 1.4.14
23. ऋग्वेदप्रातिशाख्यम् 1.22
24. पाणिनिसूत्रम् 1.4.13
25. निरुक्तम् 10.2.13
26. पाणिनिसूत्रम् 1.1.2
27. पाणिनिसूत्रम् 3.3.96
28. पाणिनिसूत्रम् 1.1.1
29. पाणिनीय और सारस्वतीय पारिभाषिकसंज्ञाओं का तुलनात्मक अध्ययन।
30. पाणिनिसूत्रम्-1.4.59
31. ऐतरेयब्राह्मणम् 16.4
32. पाणिनिसूत्रम् 1.3.2
33. पाणिनिसूत्रम् 1.1.9
34. ऋग्वेदप्रातिशाख्यम् 1.44
35. वाजसनेयिप्रातिशाख्यम् 1.43
36. पाणिनीय और सारस्वतीय पारिभाषिकसंज्ञाओं का तुलनात्मक अध्ययन।
37. चान्द्रव्याकरणम् 6.3.34
38. जैनेन्द्रव्याकरणम् 1.1.2
39. शाकटायनव्याकरणम् 1.1.6
40. पाणिनिसूत्रम्-1.1.64
41. सरस्वतीकण्ठाभरणम्
42. पाणिनिसूत्रम् 1.4.3
43. पाणिनीय और सारस्वतीय पारिभाषिकसंज्ञाओं का तुलनात्मक अध्ययन।
44. पाणिनिसूत्रम् 1.1.45
45. पाणिनीय और सारस्वतीय पारिभाषिकसंज्ञाओं का तुलनात्मक अध्ययन।
46. जैनेन्द्रव्याकरणम् 1.4.56
47. पाणिनिसूत्रम् 3.3.103
48. पाणिनिसूत्रम् 1.4.44

49. पाणिनीय और सारस्वतीय पारिभाषिकसंज्ञाओं का तुलनात्मक अध्ययन।
50. जैनेन्द्रव्याकरणम् 4.3.1.2
51. सारस्वतव्याकरणम्
52. पाणिनिसूत्रम् 3.1.92
53. कातन्त्रव्याकरणम्
54. सरस्वतीकण्ठाभरणम् 1.2=26
55. जैनेन्द्रव्याकरणम् 2.1.79

## ग्रन्थपञ्जी


1. कुमारः, वीरेन्द्रः, (सम्पा), *शौनकस्य ऋक्प्रातिशाख्यम्,* चौखम्बासंस्कृतप्रतिष्ठानम्, वाराणसी, 2011.

2. चक्रवर्तिनः, सत्यनारासणः, *पाणिनीयशब्दशास्त्र,* प्र.प्र., संस्कृतपुस्तकभाण्डारः, कोलकाता, 2016.

3. चक्रवर्तिनः, सुवोधः, *विद्यासागररचनावलि,* कामिनिप्रकाशनालयः, नवीनचन्द्रपाललेनः, कलकाता, 700009.

4. पाण्डेयः, श्रीगोपालदत्तः, स्वामीप्रह्लादगिरिः, (सम्पादकौ) *पाणिनेः अष्टाध्यायी,* द्वि.सं., चौखम्बासुरभारतीप्रकाशन, वाराणसी, 1981.

5. बन्द्योपाध्यायः, श्रीहरलालः, *समग्रव्याकरणकौमुदी,* संस्कृतवुकडिपो, विधानसरणी, कोलकाता, 700006.

6. मिश्रः, श्रीरामचन्द्रः, (सम्पा), *दण्डिनः काव्यादर्शः,* तृ.सं., चौखम्बासुरभारतीप्रकाशन, वाराणसी, 1984.

7. मीमांसकः, युधिष्ठिरः, *संस्कृतव्यापरणशास्त्र का इतिहासः,* चौखम्बापब्लिशर्स, वाराणसी, 2014.

8. शङ्करः, जि (सम्पा), *पाणिनेः अष्टाध्यायी,* चौखम्बासंस्कृतसीरीज्, वाराणसी, 1965.

# बौद्धदर्शने सत्यविमर्शः

डॉ.शान्तनुकुमारचक्रवर्त्ती

बौद्धदर्शने सत्यद्वयव्यवस्था वर्तते। आचार्यशान्तिदेवेनोक्तम्-

**“संवृतिः परमार्थश्च सत्यद्वयमिदं मतम्।**
**बुद्धेरगोचरस्तत्त्वं बुद्धिः संवृतिरुच्यते।।”१**

संव्रियते आव्रियते यथाभूतपरिज्ञानं स्वभावावरणादावृतप्रकाशनाच्च अनयेति संवृतिः। अविद्या, मोहः, विपर्यास ईति पर्यायाः। अविद्या हि असत्पदार्थस्वरूपारोपिता स्वभावदर्शनावरणात्मिका च सती संवृतिरुपपद्यते। यदुक्तमार्यशालिस्तम्बसूत्रे- “पुनरपरम्- तत्वेऽप्रतिपत्तिः मिथ्याप्रतिपत्तिः, अज्ञानमविद्या” इति।

यदुपदर्शितं च प्रतित्यसमुत्पन्नं बस्तुरूपं संवृतिरुच्यते। तदेव लोकसंवृतिसत्यमित्यभिधीयते लोकस्यैव संवृत्या तत् सत्यमिति कृत्वा।

सत्वजन्मतो जन्माधिष्ठानश्चेति यश्च जायते सत्त्वलोकः, यत्र च जायते भाजनलोके, तदुभयं दुःखमित्युक्तं भवति। यश्च सत्त्वलोको यश्च भाजनलोकः कर्मक्लेशजनितः कर्मक्लेशाधिपतेय इत्याभ्यां तयोः सत्त्वभाजनलोकयोर्दुःखत्वकारणं ज्ञापयति।

जातिर्दुःखमित्येवमादि संवृतिसत्येन दुःखम्, लौकिकज्ञानविषयत्वात्। पञ्चोपादानस्कन्धा दुःखमिति परमार्थसत्येन दुःखम्।

समुदयसत्यं यतो दुःख समुदेति। क्लेशाः क्लेशाधिपतेयं च कर्म इति सास्रवमित्यर्थः। यद्देवं किमर्थं भगवता तृष्णैव समुदयनिर्देषे निर्दिष्टा। सर्वत्रगत्वेन प्राघान्यात्। (1) तृष्णा वस्तुसर्वत्रगा प्राप्ताप्राप्तसर्वात्मभावविषयवस्तुव्यापनात्। प्राप्ते आत्मभावे तृष्णा, अप्राप्ते पौर्णभविकी। (2)अवस्थासर्वत्रगा दुःखदुःखतादित्र्यवस्थ्षु संस्कारेष्वनुगत्वात्। तत्र दुःखदुःखतावस्तेषु प्राप्तेषु वियोगतृष्णा, अप्राप्तेष्वसंयोगतृष्णा। (3) धातुसर्वत्रिका

त्रैधातुकस्फरात्कामरूपारूप्यतृष्णाभिः ।(4)एषणासर्वत्रिका तया कामभवमिथ्याब्रह्मचर्यैषणात्। कामैषणया कामघातोरपरिमुच्यमानस्तत्रैव दुःखं निर्वतयति। मिथ्या व्रह्मचर्येषणया संसारादपरिमुच्चमानस्तत्र संसरतीति ।(5) प्रकारसर्वत्रिका शाश्वतोच्छेदप्रकारानुगतत्वाद्भवविभव तृष्णाभ्याम्।

बुद्धानां सत्यद्वयमाश्रित्य धर्मदेशना प्रवर्तते। लोकसंवृतिसत्यं च, परमार्थसत्यं च। उक्तञ्च-

**"द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना।**

**लोकसंवृतिसत्यं च सत्यं च परमार्थतः।।"२**

तत्र 'स्कन्धात्मा लोक आख्यातस्तत्र लोक हि निश्चितः'। इति वचनात् पञ्च स्कन्धानुपादाय प्रज्ञप्तमानः पुद्गलः 'लोक' इत्युच्यते। समन्ताद्वरणं संवृतिः। अज्ञानं हि समन्तात् सर्वपदार्थतत्त्वावच्छादनात् संवृतिरित्युच्यते। परस्परसम्भवनं वा संवृतिरन्योन्यसमाश्रयेणेत्यर्थः। अथवा संवृतिः संकेतो लोकव्यवहार इत्यर्थः। स चाभिघानाभिधेयज्ञानज्ञेयादिलक्षणः। लोके संवृतिर्लोकसंवृतिः। किं पुनरलोकसंवृतिरप्यस्ति, यत एवं विशिष्यते– लोकसंवृतिरिति? यथावस्थितपदार्थानुवाद एषः, नात्रैषा चिन्तावतरति। अथवा-तिमिरकामलाद्युपहतेन्द्रियविपरीतदर्शनावस्थानास्तेऽलोकाः, तेषां या संवृतिरसावलोकसंवृतिः। अतो विशिष्यते- लोकसंवृतिरिति। एतच्च मध्यमकवतारे विस्तरेणोक्तं ततो वेदितव्यम्। लोकसंवृत्या सत्यं लोकसंवृतिसत्यम्। सर्वं एवायमभिधानाभिधेयज्ञानज्ञेयादिव्यवहारोऽशेषो लोकसंवृतिसत्यमित्युच्यते। न हि परमार्थत एते व्यवहाराः सम्भवन्ति।

संवृतिर्द्विविधा- लोकत एव तथ्यसंवृतिर्मिथ्यासंवृतिश्चेति। तथा हि किञ्चित् प्रतीत्यजातं नीलादिकं वस्तुरूपमदोषवदिन्द्रियैरुपलब्धं लोकत एव सत्यम्, मायामरीचिप्रतिबिम्वादिषु प्रतीत्य समुपजातमपि दोषवदिन्द्रियोपलब्धं यथास्वं तीर्थिकसिद्धान्तपरिकल्पितं च लोकत एव मिथ्या। यदुक्तम्-

**“विनोपघातेन यदिन्द्रियाणां षण्णामपि ग्राह्यमवैति लोकः।**

**सत्यं हि तल्लोकत एवं शेषं विकल्पितं लोकत एव मिथ्या”।। इति।।३**

शून्यवादीनां मते संवृतिसत्यं हि अज्ञानमात्रासमुत्थापितं निःस्वभाव बुद्धा तस्य परमार्थलक्षणां

शून्यतांप्रतिपद्यमानोयोगीनान्तद्वयेपतति ।किंतदासीद्यदिदानींनास्तीत्येवंपूर्वंभावस्वभावानुपलम्भात् पश्चादपि नास्तितां न प्रतिपद्यते। लोकसंवृतेरबाधनात् कर्मफलधर्माधर्मादिकमपि न बाधते। न चापि परमार्थं भावस्वभावत्वेन समारोपयति, निःस्वभावानामेव पदार्थानां कर्मफलादिदर्शनात्, सस्वभावानां चादर्शनात्।

यस्तु एवं सत्यद्वयविभागमपश्यन् शून्यतां संस्काराणां पश्यति, स शून्यतां पश्यन् मुमुक्षुर्नास्तितां व संस्काराणां परिकल्पयेद्। उभयथा चास्य दुर्दृष्टा शून्यता नियतं विनाशयेत्। कथं कृत्वा? यदि तावत् सर्वमिदं शून्यं सर्वं नास्तीति परिकल्पयेत्, तदास्य मिथ्यादृष्टिरापद्यते। यथोक्तम्

**विनाशयति दुर्दृष्टो धर्मोऽयमविपश्चितम्।**

**नास्तितादृष्टिसमले यस्मादस्मिन्निमज्जति।।४**

परमः उत्तमः अर्थः, परमार्थः, अकृत्रिमं वस्तुरूपम्, यदधिगमात् सर्वावृतिवासनानुसन्धिक्लेशप्रहाणं भवति। सर्वघर्माणां निःस्वभावता, शून्यता, तथता, भूतकोटिः, धर्मघातुरित्यादिपर्यायाः। सर्वस्य हि प्रतीत्यसमुत्पन्नस्य पदार्थस्य निःस्वभावता पारमार्थिकं रूपम्, यथाप्रतिभासं सांवृतस्यानुपपन्नत्वात्।

अद्वयार्थो हि परमार्थः। तमदयार्थं पञ्चभिराकारैः सन्दर्शयति। **न सत्** परिकल्पितपरतन्त्रलक्षणाभ्याम्, **न चासत्** परिनिष्पन्नलक्षणेन। **न तथा** परिकल्पितपरतन्त्रभ्याम्, परिनिष्पन्नस्यैकत्वाभावात्। **न चान्यथा**, ताभ्यामेवान्यत्वाभावात्। **न जायते, न च व्येति**, अनभिसंस्कृतत्वात्धर्मधातोः। **न हीयते न च वर्धते**, संक्लेशव्यव्वदानपक्षयोर्निरोधोत्पादे तथावस्थत्वात्। **न विशुद्धति**, प्रकृत्यसंक्लिष्टत्वात्। न च न विशुध्यति,

आगन्तुकोपक्लेशविगमात्। इत्येतत् पञ्चविधमद्वयलक्षणं परमार्थलक्षणं वेदितव्यम्। ऊक्तं च महायानसूत्रालंकारे-

**न सन्न चासन्न तथा न चान्यथा,**
**न जायते व्येति न नावहीयते।**
**न वर्धते नापि विशुद्धते पुन-**
**र्विशुद्धते तत्परमार्थलक्षणम्।।५**

बुद्धविहिते सुधर्मे सुव्यवस्थापिते स परमार्थज्ञानप्रविष्टो बोधिसत्त्वः सम्पिण्डितधर्मालम्वनस्य मूलचित्तस्य धर्मधातौ मतिमुपनिधाय या स्मृतिरूपलभ्यते तां सर्वां स्मृतिप्रवृत्तिं कल्पनामात्रामवगच्छति, एवं गुणार्णवस्य पारं बुद्धत्वमाशु व्रजतीत्येतत् परमार्थज्ञानस्य माहात्म्यम्। परमार्थज्ञानमाहात्मे महायानसूत्रालङ्कारे श्लोकः-

**"मुनिविहितसुधर्मसुव्यवस्थो,**
**मतिमुपनिधाय समूलघर्मधातौ।**
**स्मृतिगतिमवगम्य कल्पमात्रां,**
**व्रजति गुणार्णवपारमाशु धीरः।।" ६**

सर्वं हि मार्गसत्यं चतुर्भिः प्रकारैरनुगन्तव्यम्- व्यवस्थानतो विकल्पनतोऽनुभवतः परिपूरितश्च। तत्र (क) व्यवस्थानतः, यथास्वमधिगमनिष्ठाप्राप्ता श्रावकादयस्तत्पृष्ठलब्धेन ज्ञानेन परेषां प्रापणनिमित्तं नामपदव्यञ्जनकायैः मार्गसत्यं व्यवथापयन्ति, इत्यपि सत्येषु क्षान्तयो ज्ञानानीत्येवमादि। (ख) विकल्पनतः, अभिसमयप्रयुक्ता लौकिकेन यथाव्यवस्थानं विकल्पयतो यदभ्यस्यन्ति। (ग) अनुभवतः, तथाभ्यस्यन्तो यामादितो दर्शनमार्गाख्यां लोकोत्तरां निष्प्रपञ्चावस्थां प्रत्यात्ममनुभवन्ति। (घ) परिपूरितः, तदूर्ध्वं यामाश्रयपरिवृत्तिं परिपूर्यवदधिगमनिष्ठां प्राप्नुवन्ति। ते पुनरधिगमनिष्ठाप्राप्तास्तत्पृष्ठलब्धेन ज्ञानेन मार्गसत्यं व्यवस्थापयन्ति। इत्येवमादि तच्च राकारं मार्गचक्रं पुनःपुनरन्योन्याश्रयेण प्रवर्तत इति वेदितव्यम्।७

सर्वभावानां सांवृतं पारमार्थिकं चेति रूपद्वयमस्ति, तत्र यत् सांवृतं तदेव लोकेन प्रतीयते, यत्तु पारमार्थिकं तद् योगिनेत्युक्तम्। यथा मायाकारनिर्मितहस्त्यादिरूपमेव मन्त्रादिसामर्थ्यविभ्रमितलोचनो जनः पश्यति, मायाकारस्तु तत्स्वभावादि निजं तत्स्वरूपम्। एवं योगिलोकयोरपि यथायोगं प्रतिपत्तव्यम्। शान्तिदेवेनोक्तम्—

**“लोकेन भावा दृश्यन्ते कल्पन्ते चापि तत्त्वतः।**
**न तु मायावदित्यत्र विवादो योगिलोकयोः।।”**८

निःस्वभावतैव सर्वभावानां निजं पारमार्थिकं रूपमवतिष्ठते। तदेव प्रधानापुरुषार्थतया परमार्थः उत्कृष्टं प्रयोजमभिधीयते।

प्रश्नं जायते चत्वारि आर्यसत्यानि दुःखसमुदयनिरोधमार्गलक्षणानि अभिधर्मे कथितानि भगवता, तत् कथं द्वे एव सत्ये इति? उत्तरं तावत् सत्यम्, किं तर्हि वैनेयजनाशानुशयवशादेते द्वे एव चत्वारि कृत्वा कथिते, अमीषां द्वयोरेवान्तर्भावात्। तथा हि - दुःखसमुदयमार्गसत्यानि संवृतिस्वभावतया संवृतिसत्येऽन्तर्भवन्ति, निरोधसत्यं तु परमार्थसत्ये इति न कश्चिद्विरोधः।

**स्यादेतत्–** संवृतिरविद्योपदर्शितात्मता अभूतसमारोपस्वरूपत्वाद् विचारात् शतशो विशीर्यमाणपि कथं सत्यमिति? एतदपि सत्यम्, किं तु लोकाध्यवसायतः संवृतिसत्यमित्युच्यते। लोक एव हि संवृतिसत्यमिह प्रतिपन्नः। अतएव लोकसंवृतिसत्यं चेति शास्त्रेऽपि विशेष उक्त आचार्यपादैः। वस्तुतस्तु परमार्थ एव एकं सत्यम्, अतो न काचित् क्षतिरिति। यथोक्तं भगवता – “एकमेव भिक्षवः परमं सत्यं यदुत अप्रोमोषधर्म निर्वाणम्, सर्वसंस्काराश्च मृषा मोषधर्माणः।।” इति।

## पादटिप्पणी

१.बोधिचर्यावतारः ९.२

२.मध्यमकशास्त्रम्  २४.८

३.म.अ. ६.२५

४.म.शा.२४.११

५.महायानसूत्रालंकारः ६.१

६.महायानसूत्रालंकारः ६.१०

७. अभिधर्मसमुच्चयभाष्यम् पृ.७८

८. बोधिचर्यावतारः ९.५

# महाकविक्षेमेन्द्रस्य औचित्यविचारविमर्शः

**सुभद्रा मणिः वारिक्**
महाराजाश्रीरामचन्द्रभञ्जदेओ विश्वविद्यालयः, वारिपदा, ओडिशा

**उपक्रमः-**

काव्यशास्त्रकलानैपुण्याग्रगण्यवरेण्यक्षेमेन्द्रः एकाधारेण कविः, विद्वत्प्रवरः, आलंकारिकश्चासीत्। क्षेमेन्द्रस्य प्रतिभावैपुल्यदर्शनेन विद्वांसः नतमस्तकाः भवन्ति। एष अक्षरब्रह्मोपासकः सारस्वतसाधकः रामायणोपरि ग्रन्थत्रयं विरचितवान्। यथा - १.रामायणमञ्जरी,२.भारतमञ्जरी,३.वृहत्कथामञ्जरी इति। एकादशशताब्द्यां काश्मीरप्रदेशे[1] एषः क्षेमेन्द्र अजायत इति ।तत्कालनसमये काश्मीरस्य इतिहासे असन्तोषः षडयन्तं नैराश्यप्रभृतयः परिपूर्णा आसीत्। तदानीन्तनसमये १०६३ शताब्द्यां काश्मीरराजपुत्रकलसः राज्यभारं समर्प्य पुनः कालानान्तरं राज्यभारं गृहीतवान्। अनन्तरं १०७१ आङ्ग्लोशतके आत्मानं जघान। तदा तस्य विदुषीपत्नीमहाराणीसूर्यवती अपि पत्युश्चितायां शयितवती। ततः कलसस्य राज्यकाले क्षेमेन्द्रस्य जीवनलीला व्यतीता। “समयमातृकायाः” रचनाकालः१०५० शतकम् तथा अन्तिमग्रन्थदशावतारचरितस्य रचनाकालः १०६६[2]। क्षेमेन्द्रस्य कालनिर्णयः औचित्यविचारचर्चा- कविकण्ठाभरणम् तथा सुवृततिलकनामकं ग्रन्थत्रयं अनन्तराज्यस्य उल्लेखः विहितः। तेन कलसराज्यस्य नामसंकीर्त्तनं कृतम् । क्षेमेन्द्रविरचितग्रन्थानां नामानि वक्षमाणरीत्या प्रदत्तानि। यथा- १. महाकाव्यम् - रामायणमञ्जरी, भारतमञ्जरी, वृहत्कथामञ्जरी, दशावतारचरितम् तथा अवदानकल्पलता। २.उपदेशपरकः काव्यम्- कलाविलासः, समयमातृका, चारुचर्याष्टकम्, सेव्यसेवकोपदेशः, नर्ममाला, चत्तुर्वर्गसंग्रहः।ल३. अलंकारग्रन्थः- कविकण्ठाभरणम्, औचित्यविचारचर्चा, सुवृततिलकम्। ४. प्रकीर्णम् - लोकप्रकाशकोशः, नीतिकल्पतरुः तथा व्यासाष्टकम्। तत्र क्षेमेन्द्रः काश्मीरमण्डलवास्तव्यमिति वर्णयन् वृहतकथामञ्जरीग्रन्थे एवं श्लोकः दृश्यते।

**वितस्तेत्यस्ति तटिनी मोक्षश्रीहारवल्लरी।**
**रङ्गतरङ्गस्तू भङ्गैस्तर्जयन्तीव कल्मषम्।।**
**तयास्ति लोललहरीक्षात्यमानरजोव्रजम्।**
**काश्मीरमण्डलनाम मण्डलंसर्वसम्पदाम्।।**
**यस्मिन्नरीकपोलेषु कान्तिकल्लोलितार्मिषु।**
**बिम्बागतः शशीधते सूधागर्भमुखं पुनः।।**
**तीक्ष्णं तपति नोष्णांषुः करैः कुसुमकमलैः।**
**त्वष्ट्रवयत्र लावण्य नदनीतेन निर्मितः।।**
**सुक्ततार्पितारणत्तार – हार – नुपुर- मेखला।**
**नृत्यतीव कवीन्द्राणां यत्र वक्ते सरस्वती।।**

"चारुचर्या"[3] नामकशतके तेन स्पष्टीकृतं यत् व्रह्मचर्य - गार्हस्थ्यप्रभृति आश्रमेषु क्रमेण प्रवेष्टव्यम्।

**कूटशब्दाः** – क्षेमेन्द्रः, काव्यम्, कृतयः,औचित्यविचारः

**क्षेमेन्द्रस्य जीवनेतिवृत्तम्**

सूर्यसोमप्रभप्रकाशेन्द्रः जन्मना तेजस्वी तथा धनवान् आसीत्। परन्तु तस्य प्रवृत्तिरासीत् दानपूण्यार्जनम् । अकुण्ठचित्तेन सः नरपतिः धनसंग्रहापेक्षया दानकर्मणि तस्याः मतिरासीत्। वृहत्कथामञ्जर्यां वर्णितम् -

**यस्य मेरोरिवोदार कल्याणपूर्णसंम्पदः।**
**अगणयेवाभूद गेहे यस्य भोज्यं द्विजन्मनाम्।।**
**सूर्यग्रहे त्रिभिलक्षेर्दत्वा कृष्णाजिनत्रयम्।**
**अल्पप्रदोऽस्मीत्यभवत् सलज्जानतकन्धरः।।**
**स्वयम्भूनिलये श्रीमान यः प्रतिष्ठाप देवताः।**

**दत्वा कोटिचतुर्भागं देवद्विजमठादिषु।।**
**पुजयित्वा स्वयं शम्भु प्रसरद्वाष्पनिर्भरः।**
**गाढं दोर्थ्यां समालिंग्य यस्तयेव व्यपतत्।।**[4]

तत्र भारतमञ्जरी[5], औचित्यविचारचर्चा[6], दशावतारचरितग्रन्थेषु[7] क्षेमेन्देण स्वपितुर्गुणकलापप्रास्यस्तं प्रकटितं विद्यते। पितुः प्रकाशेन्द्रस्य सुपुत्रोऽयं यथा यशस्वी वर्णयति। तथैव स्वसुपुत्रेण सोमेन्द्रेण[8] पितामहस्य दानकलानैपुण्यं स्तौति स्म। एवं च क्षेमेन्द्रस्य वंशानुगतः सद्गुणावली विवक्षया आर्येन्द्रशर्मा[9], निर्वक्ति- ‘He was born with a silver spoon in this month’ क्षेमेन्द्रस्य प्रतिभा भूयसी आसीत्। साहित्य–दर्शन–नाटक–आख्यायिका-इतिहास-पुराण-शिल्पकलाप्रतिभासु तस्य प्रवेशः वैदुष्यपुर्ण आसीत्। क्षेमेन्द्रस्य गुरुवर्याणामनुक्रमवाहुल्यात् तेन संक्षेपेण औचित्यविचारचर्चायां ‘सर्वमनीषीशिष्यः’ कविकण्ठाभरणग्रन्थे ‘व्युत्पत्यैसर्वशिष्यता’। सोमेन्द्रविरचित अवदानकल्पलतायाः भूमिकायाम् आचार्यगोपदत्त आचार्यवीरभद्र– आचार्यसूर्यश्रीप्रभृतीनां उल्लेखः दृश्यते। क्षेमेन्द्रस्य अवदानकल्पलतायाः रचनापूर्वम् उपयुक्तगुरुभ्यः शिक्षाग्रहणनिमित्तमवसर आसीत्। आचार्यगोपदत्तात्[10] तेन जातकस्य विवरणं प्रशिक्षितम्। गुरुवीरभद्रेणापि[11] वहु किमपि ज्ञानं क्षेमेन्द्राय दत्तवान्। लिपिन्याससम्बन्धे गुरुसूर्यश्रीशकाशात्[12] क्षेमेन्द्रः रामयशो - देवधर इति गुरुद्वयं क्षेमेन्द्रं प्रति वहुग्रन्थाकृतीनां प्रेरणदाता आसीत्।

**क्षेमेन्द्रस्य प्रकाशितकृतयः –**

काव्यात्मकग्रन्थः- १.वृहत्कथामञ्जरी, २.भारतमञ्जरी, ३.रामायणमञ्जरी, ४.दशावतारचरितम्, ५. वौद्धावदानकल्पलता

उपदेशात्मकग्रन्थः- १.कलाविलासः, २.समयमातृका, ३.चारुचर्याष्टकम्, ४.सेव्यसेवकोपदेशः, ५. दर्पदलनम्, ६. देशोपदेशः, ७. नर्ममाला, ८. चर्तुवर्गसंग्रहः, ९. नीतिकल्पतरूः

शास्त्रीयग्रन्थः– १.औचित्यविचारचर्चा, २.कविकण्ठाभरणम्, ३.सुवृत्ततिलकम् वृहत्कथामञ्जरी– वृहत्कथामञ्जरीग्रन्थस्य रचना कालः १०३७ खीष्टाब्दः। अस्य ग्रन्थस्य संस्कृतसाहित्ये महत्प्राधान्यं दरीदृश्यते। यद्यपि वृहत्कथा मौलिकतया अप्राप्या तथापि अस्य ग्रन्थस्य प्रतिलिपिः क्षेमेन्द्रस्य सन्निधौ आसीत्। संम्पूर्णग्रन्थः अष्टादशलम्बकेषु सुविभक्तः। तत्र उपसंहाररूपेण एकनोविंशतिलम्बकः वर्णितः। अत्र श्लोकसंख्या ७६६८ विद्यते। वृहत्कथामञ्जरीग्रन्थे गुणाढ्यानां वर्णनं विद्यते। तत्र द्वितीय-तृतीयलम्बकयोः उदयनस्तथापद्मावतीकथा अस्ति। चतुर्थलम्बके नरवाहनदत्तस्य जन्मवृत्तान्तः वर्णिता। अग्रे त्रिषुलम्बकेषु एतेषु कथानां व्याख्यानं प्रदर्शितम्। पुनश्च अष्टमलम्बकादारभ्य अष्टादशलम्बकं यावत् विविधकथाः विस्तृततया कविक्षेमेन्द्रेण समुपन्यस्ताः सन्ति। तत्र पञ्चमलम्बकं यावत् क्षेमेन्द्रेण पुर्वतया गुणैढ्यानं विवरणं पर्यालोचितम्। एवं रीत्यातेन वृहत्कथा अभिनवतया समलं कृत्य काव्यसौन्दर्यं सम्भूष्य वृहत्कथामञ्जरी विरचिता।

**भारतमञ्जरी–**

महाभारतग्रन्थस्य संक्षिप्तरूपान्तरमेव क्षेमेन्द्रविरचिताभारतमञ्जरी। भारतमञ्जरीग्रन्थविरचनात् परं क्षेमेन्द्रः व्यासदासोपाधिना विभूषिता। अत्र समुदायेन १०६९२श्लोकाः विद्यन्ते। ग्रन्थोऽयम् एकनोविंशतिपर्वविशिष्टः।

**रामायणमञ्जरी-**

रामायणमहाभारतग्रन्थे सुप्रभावितः कविक्षेमेन्द्रः रामायणमञ्जरीग्रन्थः प्रणितवान्। अस्य ग्रन्थस्य विरचनात् परं कविना कवीन्द्रत्वं लब्धम्। रामायणमञ्जरी वाल्मीकिकृता रामायणस्य संक्षिप्ततमः रसमयकाव्यविशेषः ग्रन्थेऽस्मिन् ६४०० श्लोकाः सन्ति। अत्र वाल्मीकिरामायणवत् वालकाण्डम्, अयोध्याकाण्डम्, अरण्यकाण्डम्, किस्किन्धाकाण्डम्, सुन्दरकाण्डम्, युद्धकाण्डम्, उत्तरकाण्डप्रभृतिः सप्तकाण्डानि विद्यन्ते। कवेरीयं कृतिः वर्णनावैभवेषु मूलरामायणस्य मौलिकतां न जहाति। रामायणमञ्जरीग्रन्थे उत्प्रेक्षा- रूपक - उपमालंकाराणां

सन्निवेशः दृश्यते। काव्येऽस्मिन् वर्णनावैभवः पदसौष्ठव आध्यात्मकत्वकदम्बानां वाहुल्यं लक्ष्यते।

**दशावतारचरितम्–**

दशावतारचरितग्रन्थेऽस्मिन् भगवतचरितविष्णोः दशावतारवतारवर्णनं विहितम्। महाकाव्यस्य विभाजनमवतारणाधारेण कृतमस्ति। तत्र १०५९ श्लोकाः सन्ति। अस्य रचनाकालः १०६६ ख्रीष्टाब्दः मन्यते। महाकविक्षेमेन्द्रस्य कृतिरीयमन्तिमा मन्यते । अत्र इदमेव वैशिष्ट्यं यत् क्षेमेन्द्रः स्वकाव्यकृतिः प्रणयनसमये वैष्णवधर्ममनुचकार।

**वौद्धावदानकल्पलता-**

ग्रन्थोऽयं जातककथानां संग्रहरूपः। अस्य प्रकाशनं कलकत्तानगरे १८८८-१९१८ मध्ये जातमिति। अत्र १०८ पल्लवितकथाः सन्ति। यत्र १०७ कथानां प्रणयनं क्षेमेन्द्रेण कृतं परन्तु १०८ तमकथायाः प्रणयनं तस्य पुत्रसोमेन्द्रेण कृतमिति। अवदानकल्पलतायाः भूमिकायां सोमेन्द्रेण एवं प्रकटीकृतं जातं। वौद्ध आचार्यनक्क[13]- गोपदत्तयोः[14] प्रार्थनान्तरम् अस्य ग्रन्थस्य रचना जाता। क्षेमेन्द्रेण अवदानकथात्रयस्य विरचनां प्रारभ्य दीर्घत्वात् स्थगितं कृतवान्। परन्तु स्वप्नेन भगवता प्रेरितः सन्[15] पुनः तस्य पूर्णतां सम्पादितवान्।

**कलाविलासः–**

हास्यव्यङ्ग्यशैलीमाश्रित्य महाकविक्षेमेन्द्रस्य उपदेशप्रधानग्रन्थेषु प्राधान्यं स्वीक्रियते। अस्यां कृतौ दशसर्गाः सन्ति। ग्रन्थेऽस्मिन् दम्भाख्यानं नामकः प्रथमसर्गे संम्पूर्णकलानां प्रवीणमूलदेवस्य परिचयः प्रदत्तः। अत्र सार्थवादहिरण्यगुप्तः स्वपुत्रचन्द्रगुप्तस्य छलविद्याप्रशिक्षणाय मूलदेवस्य संरक्षणे दत्तवान्। मूलदेवः स्वशिष्यचन्द्रगुप्तः चक्रवर्त्तित्वलाभाय[16] दम्भविषये कथयति– यत् समग्रसंसारः दम्भपूर्णः। साधु– सन्यासिनः, वैद्यः, भृत्यः, क्षत्रियः, विट एते दम्भानां स्वरूपं भवति। द्वितीयसर्गे लोभस्य तृतीयसर्गे कामस्य, चतुर्थसर्गे वेश्या, पञ्चमसर्गे कायस्तस्य, षष्ठसर्गे मन्दस्य, सप्तमसर्गे गायिकानां चित्रणं जातम्।

अन्तिमसर्गद्वये[17] कुमार्गेभ्य आत्मरक्षायै युवकानां कृते उपदेशः प्रदत्तः। ड. किथ्[18] मतानुसारमस्यां कृतो चित्राणामाधुनिकीप्रेक्षा परिपूर्णा। कीथ मोहदयेन संस्कृतसाहित्यतिहासे[19] कलाविलासस्योपरि मनोरमाः श्लोकाः वर्णिताः।

**समयमातृका -**

क्षेमेन्द्रस्य या उत्कृष्टरचना अस्ति। या कृतिस्तस्य रूढाकृतिरूपेण विवेचिता। अत्र श्लोकानां संख्या ६३५ विद्यते। अस्यां कृतौ वेश्यानां जालसम्बन्धे वर्णना सुन्दरतया कविना चित्रिता। अत्र अशितिविधः प्रेमिणां वर्णनं दृश्यते। धनहीनप्रेमिणां नैराश्य त्रयोविंशति उपायाः वर्णिता।

**चारुचर्याष्टकम् -**

अर्थान्तरन्यासः तथा दृष्टान्तमाध्यमेन नीतिमूलकोपदेशाः वर्णिताः। यत्र एकशतम् अनुष्टुपछन्दोनिबद्धम्। चारुचर्याष्टकं नितरां लधुग्रन्थः। अत्र सद्गृहस्थस्य धर्माचरणं विशदतया प्रतिपादितम्। इतिहाससम्बन्धे ज्ञानमपि अत्र लक्ष्यते।

**सेव्यसेवकोपदेशः -**

अत्र मुनीव तथा सेवकानां कर्त्तव्यः वर्णनं दृश्यते। अत्र मुनीव सेवकानां पारम्पारिकसम्बन्धैः केचन विषयाः वर्णिताः। अत्र सेवावृत्तिरेव महीयसिवृतिरस्ति।

**दर्पदलनम् -**

दर्पदलनग्रन्थे सप्तअध्यायाः सन्ति। प्रथमविचारे कविना आभिजात्यं, धनं, ज्ञानं, सौन्दर्य, वीरता तथा तप इति विषये पर्यालोचना कृता। प्रत्येकेस्मिन् अध्याये एतेषां कारणानां प्राकटस्य हेतुरपि कविना विनिर्दिष्टः। ग्रन्थेस्मिन् ५१५ श्लोकाः सन्ति। दर्पदलनग्रन्थः संस्कृतसाहित्ये एकाश्रेष्ठः रचना अस्ति।

**कविकण्ठाभरणम् -**

कविकण्ठाभरणमपि क्षेमेन्द्रस्य गुरुत्वपूर्णकृतेषु महत्वं विदधाति। ग्रन्थस्य नाम्ना इव प्रतीयते एतत् कविना कण्ठभूषणमिव शोभते। ग्रन्थोऽयं पञ्चसन्धिषु विभज्यमानः सन् जनानां मनांसि रञ्जयति। ग्रन्थेऽस्मिन् द्वितीयसन्धौ त्रिविंशतिकारिकाषु एकशतव्यावहारिकोपदेशाः लक्ष्यन्ते। क्षेमेन्दानुसारं चमत्काराभावात् कवेः काव्यस्य काव्यत्वं नैव संगछते। तथायि कविकण्ठाभरणे 'न हि चमत्कारविरहितस्य कवेः काव्यस्य वा काव्यत्वम्'। तत्र कारिकाद्वये चतुर्थसन्धौ गुणदोषाणामुपरि विचारकृतः। यथाशब्दवैमूल्यं, अर्थवैमूल्यं, रसवैमूल्यं इति त्रयं काव्यस्य गुणस्वरूपं भवति। एवं च शब्दकालुष्यं, अर्थकालुष्यं, रसकालूष्यमिति त्रयं काव्यस्य दोषाः कथ्यन्ते। कविना दशविधचमत्काराणामपि वर्णनं विहितम्। तद्यथा तत्र दशविधचमत्कारः–अविचारितरमणीयः, विचार्यमाणरमणीयः, समस्तसूक्तव्यापाररसक्तैकदेशः, दृश्यः शब्दगतः, शब्दार्थगतः, अलंकारगतः, रसगतः, प्रख्यातवृतिगतश्च।

**सुवृत्ततिलकम् -**

एतत् छन्दशास्त्रं विन्यासत्रये सुविभक्त्यं प्रथमविन्यासः भवति। वृतावचयः यत्र ३८ कारिकाः सन्ति। यत्र च २६ छन्दसां लक्षणमुदाहरणं च प्रदत्त। एवं च गुणदोशवर्णवर्णनं नामकः दित्तीयविन्यासः। यत्र छन्दसमन्तर्गतः विषयवस्तुनि वर्णितानि सन्ति। अत्र ४६ कारिकाः सन्ति। ७५ श्लोकाः विद्यन्ते। एवं च वृति - विनियोगः नामकः तृतीयविन्यासः। यत्र कस्मिन् सन्दर्भ किम् छन्दः प्रयोगार्ह तदत्र विचारितम्।

**क्षेमेन्द्रस्य औचित्यविचारचर्चा-**

महाकविक्षेमेन्द्रेण औचित्यविचारचर्चा महता प्रयाशेन प्रज्ञापाटवेन प्रणिता विद्यते। तत्र औचित्यविचारचर्चाग्रन्थे पञ्चपञ्चाशत् औचित्योनौचित्यानां विचारः कविवरेण प्रदर्शिता अस्ति। तेषां सर्वेषां औचित्योनौचित्यानां नामानि नीचैः प्रदत्तानि सन्ति। अत्र प्रामुख्येन औचित्यं द्विविधं विभज्यते। प्रथमं तु रसजीवितभूतौचित्यविचारः द्वितीयः तु काव्यशरीर – प्राणभूतौचित्यविचारः

औचित्यरीत्या सप्तविंशति एवं च अनौचित्यरीत्या सप्तविंशति उभयविधमाहत्य चतुर्पञ्चाशत्भेदाः विद्यन्ते ।

१. पदौचित्यस्य लक्षणोदाहरणम्

२. पदाऽनौचित्यम्

३. वाक्यगतौचित्यस्य लक्षणोदाहरणम्

४. वाक्यगतानौचित्यस्योदाहरणम्

५. प्रबन्धार्थौचित्यस्य लक्षणोदाहरणम्

६. प्रबन्धार्थानौचित्यस्योदाहरणम्

७. गुणौचित्यस्य लक्षणोदाहरणम्

८. गुणानौचित्यस्य लक्षणोदाहरणम्

९. अलंकारौचित्यस्य लक्षणोदाहरणम्

१०. अलंकारानौचित्यस्योदाहरणम्

११. रसौचित्यानौचित्तयोः लक्षणोदाहरणानि

१२. रससङ्करौचित्यस्य लक्षणोदाहरणानि

१३. रससङ्करानौचित्यस्योदाहरणानि

१४. क्रियापदौचित्यस्य लक्षणोदाहरणम्

१५. क्रियापदानौचित्यस्योदाहरणम्

१६. कारकौचित्यानौचित्तयोः लक्षणोदाहरणानि

१७. लिङ्गौचित्यस्य लक्षणोदाहरणम्

१८. लिङ्गानौचित्यस्योदाहरणम्

१९. वचनौचित्यस्य लक्षणोदाहरणम्

२०. वचनानौचित्यस्योदाहरणम्

२१. विशेषणौचित्यस्य लक्षणोदाहरणम्

२२. विशेषणौचित्यस्योदाहरणम्

२३. उपसर्गौचित्यस्य लक्षणोदाहरणम्

२४. उपसर्गानौचित्यस्योदाहरणम्

१८. लिङ्गानौचित्यस्योदाहरणम्

२०.वचनानौचित्यस्योदाहरणम्

२५. निपातौचित्यस्य लक्षणोदाहरणम्

२६. निपातानौचित्यस्योदाहरणम्

२७. कालौचित्यस्य लक्षणोदाहरणम्

२८.कालानौचित्यस्योदाहरणम्

२९. देशौचित्यस्य लक्षणोदाहरणम्

३०. देशानौचित्यस्योदाहरणम्

३१. कूलौचित्यस्य लक्षणोदाहरणम्

३२. कूलानौचित्यस्योदाहरणम्

३३. व्रतौचित्यस्य लक्षणोदाहरणम्

३४. व्रतानौचित्यस्योदाहरणम्

३५. तत्त्वौचित्यस्य लक्षणोदाहरणम्

३६. तत्त्वानौचित्यस्योदाहरणम्

३७. सत्त्वौचित्यस्य लक्षणोदाहरणम्

३८. सत्त्वानौचित्यस्योदाहरणम्

३९. अभिप्रायौचित्यस्य लक्षणोदाहरणम्

४०. अभिप्रायानौचित्यस्योदाहरणम्

४१. स्वभावौचित्यस्य लक्षणोदाहरणम्

४२. स्वभावानौचित्यस्योदाहरणम्

४३. सारसंग्रहौचित्यस्य लक्षणोदाहरणम्

४४. सारसंग्रहानौचित्यस्योदाहरणम्

४५. प्रतिभौचित्यस्य लक्षणोदाहरणम्

४६. प्रतिभानौचित्यस्योदाहरणम्

४७. अवस्थौचित्यस्य लक्षणोदाहरणम्

४८. अवस्थानौचित्यस्योदाहरणम्

४९. विचारौचित्यस्य लक्षणोदाहरणम्

५०. विचारानौचित्यस्योदाहरणम्

५१. नामौचित्यस्य लक्षणोदाहरणम्

५२. नामानौचित्यस्योदाहरणम्

५३. आशीर्वचनौचित्यस्य लक्षणोदाहरणम्

५४. आशीर्वचनानौचित्यस्योदाहरणम्

**प्रथमतः रसजीवितभूतौचित्यविचारः –**

कविक्षेमेन्द्र आदौ काव्यानामलंकारभूतोपमा– रूपकप्रभृतिः विषयानां विवेचननिमित्तं कविकर्णिकानामकग्रन्थः विरचितः। अनन्तरं काव्यकलङ्कस्तथा काव्यविवेकमिति काव्यद्वयं विरच्य अनन्तरं रमणीयरसास्वादवस्थायां काव्ये चमत्कारं जनयितुं जीवनभूतौचित्यस्य अन्वेषणे कृतेऽपि औचित्यं नैव परिलक्ष्यते। तस्मात् औचित्यं विना काव्यस्य अलंकाराः व्यर्था भवेयु। तथैव गुणश्चव्यर्थस्यात् तदर्थं अलंकारेभ्यः गुणेभ्यऔचित्यस्य वैशिष्ट्यं प्रतिपादयितुं कविना एषः ग्रन्थः प्रतिपादितः[20]। आदौ कविः रसजीवतभूतौचित्यस्य विचारमुपस्थापयति। यथा-

**अलंकारास्त्वलङ्कारा गुण एव गुणाः सदा ।**
**औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम् ।।**[21]

अत्र उपमा– रूपकादिरलंकारा आभूषणत्वात् काव्यस्य वाह्यशोभावर्द्धकाः तथैव प्रसादमाधुर्यादिगुणा उदारता– सत्यशीलताया आन्तरिकगुणवत् सुशोभन्ते। परन्तु काव्यस्य प्राणभूततत्वमौचित्यमिति विपश्चितां सुनिश्चितः सिद्धान्तः।

द्वितीयतः काव्यशरीर– प्राणभूतौचित्यविचारः –

क्षेमेन्द्रेण सकलकाव्यशरीरस्य प्राणभूतौचित्यविषये सप्तविंशति तथ्यानि आलोचयति। यथा -

**पदे वाक्ये प्रबन्धार्थे गुणेऽलङ्करणे रसे।**
**क्रियायां कारके लिङ्गे वचने च विशेषणे।।**
**उपसर्गे निपाते च काले देशे कूले व्रते।**
**तत्वे सत्त्वेऽप्यभिप्राये स्वभावे सारसंग्रहे।।**
**प्रतिभायामवस्थायां विचारे नाम्न्ययाशिषि।**
**काव्यस्याङ्गेषु च प्राहुरौचित्यं व्यापि जीवितम् ।।**[22]

तानि यथा– १. पदम्, २. वाक्यम्, ३. प्रबन्धार्थः, ४. गुणः, ५. अलंकारः, ६. रसः, ७.क्रिया, ८. कारकम्, ९. लिङ्गम्, १०. वचनम्, ११. विशेषणम्, १२. उपसर्गः १३. निपातः, १४.कालः, १५.देशः, १६. कूलम्, १७. व्रतम्, १८. तत्वम्, १९. सत्त्वम्, २०. अभिप्रायः, २१. स्वभावः, २२. सारसंग्रहः, २३. प्रतिभा, २४. अवस्था, २५. विचारः, २६. नामः, २७. आशीर्वादः। अत्र काव्यशरीरस्य विभज्यमान स्थानेषु कानिचित् स्थानानि काव्यस्य मार्मिकतथ्यं सूचयन्ति। अत्र पदवाक्यविवर्जितेषु स्थलेष्वपि स्थितिः विद्यते। अत्र उदाहरणम् यथा –

**तिलकं विभ्रति सुक्तिर्भात्येकमुचितं पदम् ।**
**चन्द्राननेन कस्तुरीकृतं श्यामेव चान्द्रनम् ।।**[23]

अस्य भावार्थः– सत् कवेः रचना तिलकायमाना भवति। यथा कस्तुरीरचित तिलकं धारयति गौरवर्णा चन्द्रानना रमणी शोभते यथा वा शुभ्रचन्दनतिलकं धारयति। धवलचन्दनतिलकं विभ्रती। श्यामवर्णा तरूणी इव शोभते। एतद् पदौचित्यम्।

### उपसंहारः-

महाकविक्षेमेन्द्रः रामायणमञ्जरीकाव्यं विरच्य कालेकाले विदुषां हृदये सदैव महान्तस्थानमधिकरोति। तस्य वहुमूखिप्रतिभा तस्य कृतिषु अनुभूयते। साहित्य-दर्शन–नाटक-पुराण–शिल्पकलाप्रभृतिषु तस्य नैपूर्ण्य सर्वानतिशेते। औचित्यविचारचर्चाक्षेमेन्द्रस्य कवित्वकृते स्वतन्तं स्थानं महत्वं च वर्धापयति। संस्कृतसाहित्यविकाशधारायां कविक्षेमेन्द्रस्य काव्यकविताकलापविलासः नितरामेव सहृदयहृदये चरमप्रकर्षं जनयति।

### पादटीकाः

१. Born is Kashmir, kshemendra appears to have lived all his life in the land of his birth. सी.एस.एल.डब्ल्यु.के.पृ.४३,४६

. २. काश्मिरेषुवभूवसिन्धुराधिकः सिन्धोश्चनिम्नाशयः

दशावतारचरित क्षेमेन्द्रनाम्नभवत् ।। दशावतारचरित

३. चारूचर्या,पृ-२२ श्लो.५२.

४. वृहतकथामञ्जरी, उपसंहारः -३२-३५

५. भारतमञ्जरी - उपसंहारः -२

६. ओचित्यविचारचर्चा-उपसंहारः -५

७. दशावतारचरितः -उपसंहारः -२

८. अवदानकल्पलता – ३

९.क्षे.ल.का.सं.की-पृ-२

१०. आचार्यगोपदत्तैस्वदानक्रमज्झितः उच्चित्योच्चित्य विहिता गद्यपद्यविशङ्खलता ।। एकमार्गानुसारिण्यः परं गाम्भीर्यकर्कशा । विस्तीर्णवर्णसाः सन्ति निजजातकमालिका ।। अवदानकल्पलता -७-८

११. अथाभेत्य स्वयं तस्य गृहं प्रज्ञाप्रकाशवान् । आचार्यां वीरभद्राख्यः प्रख्यात् सुकृतज्ज्वलः ।। तत्र -२

१२. यस्य हस्तगतं सर्वशास्त्रमायाति शुद्धताम् । आचार्यः सोऽत्र सूर्यश्रीलिपिन्यासार्थमर्थितः ।। तत्र

१३. सोगतः ख्यातः सुकृतो नक्कनामसमभ्यधात् । अ.क.ल. भूमिका - ६

१४. आचार्यगोपदत्तोस्वदानक्रमज्झितः तत्र -८

१५. ततः स्वप्ने भगवताजिनेन प्रेरितः स्वयम् ।

सोजाहित् पुनरयोगमवदानार्थ संग्रहे।। तत्र-११

१६. वकदम्भी दम्भपतिदम्भनरेन्द्रश्च कूर्मजो दम्भः।

मार्जारदम्भ एवप्रातो दम्भेषु चक्रवर्त्तित्वम् ।। कलाविलास

१७. तमसि वरावश्चोरो हाहाकारेण याति संत्रस्तः ।

गायनचोरः प्रकटं हाहाकृत्वेवहरति सर्वस्वम् ।। कलाविलास ७-६

१८. There is certain respect a curious modernity in kshemendra's pictures "- history of Sanskrit literature - prof keith page -238

१९.History of Sanskrit literature prof. keith page २३९,२४०

२०. काव्यस्यालमलङ्कारैः किं मिथ्यागणितैर्गुणैः ।

यस्य जीवितमौचित्यं विचिन्यापि न दृश्यते ।। औ. वि. च-४-क्षेमेन्द्रः

२१. ओ.वि.च-५-क्षेमेन्द्रः

२२.ओ.चि.च -६-१०

२३.ओ.चि.च- ११

# महाभारते तपसः निर्वचनम्

**श्री शान्तिघोषः**

सहायकाध्यापकः (अतिथिः), अद्वैतवेदान्तविभागः,

श्रीसीतारामवैदिकादर्शसंस्कृतमहाविद्यालयः, कोलकाता-३५

**शोधपत्रसारः-**

मुमुक्षूणां साधकानां कृते चत्वारि साधनानि वेदान्तेषु उपदिष्टानि सन्ति। तानि हि विवेकः, वैराग्यम्, शमादिषट्कसम्पत्तिः, मुमुक्षुत्वं चेति। श्रवणमनननिदिध्यासनानाम् अन्तरङ्गसाधनत्वेन परिगणनं ब्रह्मसूत्रशाङ्करभाष्ये कृतं भगवता भाष्यकारेण। श्रुतौ स्मृतौ च तपः अपि साधनेषु गण्यते। **तपसा ब्रह्म विजिज्ञासस्व** इति श्रुतिरत्र मानम्। स्मृतावपि **यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्** इति भगवद्गीतायाम्। पापस्य कर्मणः क्षयात् शुद्धज्ञानोदयः भवति इति शास्त्रसमयः। धर्माधर्मौ इति उभावपि संसारकारणत्वेन पापशब्देन अभिधीयते। तस्य पापस्य क्षयः तपसा सम्भवति। तथा च स्मृतिवचनं **तपसा कल्मषं हन्ति** इति। अन्यदपि प्रमाणवचनं **ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः** इति। प्रकृतशोधप्रबन्धे महाभारते यानि तपसः निर्वचनानि उपलभ्यन्ते तानि लक्षणानि तेषाञ्च आशयः संक्षेपतः प्रस्तौति अयं शोधप्रबन्धः। तेन सह उपनिषदादिग्रन्थे तपसः निरूपणं विभागश्च यथा वर्णितः तदत्र प्रतिपाद्यते। अन्ते तपसः किं फलं तदपि प्रतिपादितम्।

**सारिष्ठाः शब्दाः-** तपः, ब्रह्मचर्यम्, श्रवणम्, मननम्, निदिध्यासनम्, तितिक्षा, कर्मसन्न्यासः, अहिंसा इत्यादयः।

**उपोद्घातः-**

ज्ञानात् मोक्ष[66] इति शाङ्करवेदान्तराद्धान्तः। प्रत्यगभिन्नं परब्रह्मचैतन्यम् एकमेवाद्वितीयं ब्रह्म वेदान्ते विषयः।[67] तद्ब्रह्म शारीरस्य जीवस्य आत्मा इति एतादृशाभेदबोधेन स्वस्वरूपसाक्षात्काररूपः मोक्षः सिद्ध्यति। तत्त्वमस्यादिमहावाक्यैः तदेव तात्पर्यं निगदं व्याख्यातम्। तच्च तत्त्वमस्यादिमहावाक्योत्थं ज्ञानं साधनसापेक्षम्। मुमुक्षोः ब्रह्मसाक्षात्कारे चत्वारि साधनानि सन्ति इति शास्त्रेभ्यः सामान्यतः परिज्ञायते।[68] तानि च विवेकः, वैराग्यम्, शमादिषट्कसम्पत्तिः, मुमुक्षुत्वं चेति। कुत्रचित् साधनानाम् अन्तरङ्गबहिरङ्गरूपेण द्वेधा विभागं कृत्वा तन्मध्ये अपेक्षितानि साधनानि योजितानि सन्ति। श्रवणम्, मननम्, निदिध्यासनं चेति त्रीणि अन्तरङ्गसाधनानि। शमदमप्रभृतीनि बहिरङ्गसाधनानि। श्रुतौ स्मृतौ च तपोऽपि साधनेषु गण्यते। “तपसा ब्रह्म विजिज्ञासस्व”[69] इति श्रुतिरत्र मानम्। “यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्”[70] इति गीतायां तपसः माहात्म्यम् आह श्रीभगवान् वासुदेवः। ज्ञानोत्पत्तौ प्रतिबन्धकताम् आचरति कल्मषम्। कल्मषपदेन रागद्वेषयोः ग्रहणम् उचितम्। तपसा तयोः क्षयः साध्यते। तथा च स्मृतिः “तपसा कल्मषं हन्ति”[71] इति। अन्यच्च प्रमाणं “ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः”[72] इति। अतः चित्तशुद्धिकारकेषु साधनेषु तपः अपि परिगण्यते।

---

66 श्रुतिप्रमाणं- ‘तमेव विदित्वातिमृत्युमेति’, ‘तरति शोकमात्मवित्’ इत्यादि। स्मृतिप्रमाणम्- ‘न हि ज्ञानेन सदृशं पवित्रमिह विद्यते’ इत्यादि।

67 ‘विषयो जीवब्रह्मैक्यं शुद्धचैतन्यं प्रमेयं तत्रैव वेदान्तानां तात्पर्यात्’ इति। (सदानन्दयोगीन्द्रप्रणीतः वेदान्तसारः)

68 ‘उच्यते- नित्यानित्यवस्तुविवेकः, इहामुत्रभोगविरागः, शमदमादिसाधनसम्पत्, मुमुक्षुत्वं च’ इति। (ब्र. सू. १/१/१)

69 तै. उ.- ३/२/१

70 भ.गी.- १८/५

71 मनु.- १२/१०४

72 महा. शान्ति.- २०४/८

वाङ्मयं शारीरं मानसं चेति त्रिविधं तप इति ईश्वरगीतासु प्रोक्तम्। शारीरं तपः द्वन्द्वसहनम्। मानसं तपः ज्ञानलक्षणम्। सत्यभाषणं यथाभूतभाषणं वा वाङ्मयं तपः। तदुक्तं भगवद्भिः श्रीरामकृष्णपरमहंसस्वामिभिः 'सत्यमेव कलौ तपः' इति।[73] तपोऽनुष्ठानस्य कृते आलम्बनं हि शरीरम्। धर्मसंग्रहार्थं शरीरस्य महती भूमिका अस्ति। तदुक्तं "शरीरमाद्यं खलु धर्मसाधनम्"[74] इति। न हि अशरीरस्य साधनप्रवृत्तिः लोकतः शास्त्रतः वा सिद्धा। भगवता व्यासेन प्रणीते धर्मप्रमाणभूते महाभारतग्रन्थे तपसः विविधं रूपं नाना निर्वचनं च उपलभ्यते। तेषामेव तपःप्रतिपादकवाक्यानां विस्तरशः अर्थप्रतिपादनम् अध्ययनं च अस्य लघुकायस्य शोधप्रबन्धस्य विषयः। अर्थप्रतिपादने सहकारिभूतानां शास्त्रान्तरीयप्रमाणानां यथास्थानं संयोजनमपि अत्र क्रियते।

**शोधपद्धतिः-**

प्रथमतः अत्र तपसः निर्वचनानि उच्यन्ते। तत्र च विविधशास्त्रेभ्यः लक्षणानि प्रमाणानि च स्वीक्रियन्ते। अनन्तरं महाभारतीयवचनानां संग्रहः क्रियते। तेषां च विस्तरेण अर्थः प्रतिपाद्यते। अन्ते तपसां माहात्म्यविषये लोकोपकारिताविषये च उच्यते। एवमत्र विमर्शात्मकम् अध्ययनमेव विधीयते।

73 विज्ञानानन्देर् स्मृतिकथा- ८५ (বিজ্ঞানানন্দের স্মৃতিকথা- ৮৫)

74 कुमार.- ५/३३

**तपश्शब्दार्थः-**

द्वन्द्वसहनमेव[75] तपः इति सामान्यतया तपसः लक्षणं वक्तुं शक्यते। द्वन्द्वशब्देन युगलं ग्राह्यम्। युगलेषु शीतोष्णे, हर्षविषादौ, रागद्वेषौ, धर्माधर्मौ, प्रियाप्रियौ, लाभालाभौ चेति सन्ति। मनसि विद्यमानयोः विरुद्धयोः द्वयोः धर्मयोः विरुद्धभावं परित्यज्य सहनमेव द्वन्द्वसहनम्। विरुद्धभावपरित्यागः हि अप्रतीकारपूर्वकं करणीयः। अपि च सहनं नाम उष्णे शीते वा स्वयं गत्वा सहनं नास्ति। अपि तु दैवायत्तं यत् शीतम् उष्णं वा ताभ्यां व्यथितोऽपि साधकः तत्सोढुं प्रयत्नं कुर्वीत। अतः सहनं हि विवेकपूर्वकं त्यागः। विवेकश्च इत्थं शारीरे आत्मनि प्रतीयमानाः सुखित्वादयः धर्माः शरीरसम्बन्धात् एव न तु वास्तिवकतया सन्ति। अतः नित्यत्वानित्यत्वयोः विरुद्धधर्मयोः युगपत् एकस्मिन् वस्तुनि अवस्थानं सुतरां न सम्भवति इति विवेक एव द्वन्द्वसहनम्। द्वन्द्वसहिष्णोः तापसस्य फलविषये श्रीमद्भगवद्गीतायां भगवता वासुदेवेन जगदे सुखदुःखयोः समत्वदर्शिना अमृतत्वपदम् अवाप्यते।[76] शास्त्रे अन्यत्र द्वन्द्वसहनं तितिक्षाशब्देनापि उच्यते। स्वप्रकाशचिद्रूपे स्वात्मनि शीतोष्णादेर्द्वन्द्वस्य अत्यन्ताभावात् मिथ्याभूतानां तेषां परस्परविरुद्धयुगलानां चिन्ताविलापराहित्येन यत्सहनं सा तितिक्षा इत्युच्यते।[77] इन्द्रियाणाम् अयं स्वभावः यत् बाह्यविषयान् एव भोग्यरूपेण ज्ञेयरूपेण वा विषयीकरोति। अतः बहिर्मुखानि इन्द्रियाणि न तु अन्तर्मुखानि। येन साधनविशेषेण इन्द्रियाणां बहिर्मुखप्रवृत्तौ बाधः क्रियते तदेव तपः। अतः चित्तस्थैर्यसाधनं तपः। तपो हि कृच्छ्रं कर्म अतः शरीरशोषणेव तत्र भवति। पुराणेषु अपि श्रमसाध्यं परमदुष्करं तप इत्युच्यते।[78] इन्द्रियाणां

---

[75] 'तपः द्वन्द्वसहनम्' इति। (पा. यो. व्या. भा.- २/३२)

[76] 'यं हि न व्यथयन्त्येते पुरुषं पुरुषर्भज। समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते॥ इति। (भ.गी. – २/१५)

[77] 'श्रीमच्छङ्काचार्यविरचिते साधनपञ्चके अद्वैतवेदान्तशास्त्रार्थपरामर्शः' (विशिष्टाचार्यशोधप्रबन्धः, अनुसन्धाता- श्री शान्ति-घोषः), तृतीयः परिच्छेदः, सद्गुरोः शरणागतिमाध्यमेन साधनानुष्ठानम्, ७६ पृष्ठम्

[78] 'तपो हि श्रम उच्यते' (प. पु. – ६/२११), तपः परमदुष्करम् (प. पु.- १०७/३३)

मनसश्च नियमनं येन भवति तथाविधम् अनुष्ठानं तप इत्युक्तं नीतिश्लोकेषु।[79] पापक्षयसाधनं चान्द्रायणादिकं प्रायश्चित्तकर्मापि तपश्शब्दवाच्यं भवति। पापस्य कर्मणः क्षयात् निर्मलं ज्ञानम् उत्पद्यते इति शास्त्रसमयः। प्रायश्चित्तमपि सञ्चितपापक्षयद्वारा चित्तशुद्धये भवति। एवमशेषदुरितक्षयार्थं शास्त्रोक्तक्लिष्टजीवनचर्याम् अवलम्ब्य शरीरशोषणमेव तपः।

**उपनिषदादिग्रन्थे तपसः निरूपणं तद्विभागश्च-**

उपनिषदां हृदयं हि श्रीमद्भगवद्गीता। यतो हि साक्षाद्भगवता उक्तं 'गीता मे हृदयं पार्थ' इति। शारीरं वाङ्मयं मानसं चेति त्रिविधं तपः गीतासु आख्यातम्। तेषु देव-द्विज-गुरु-प्राज्ञानां सपर्या, द्विविधशुचिता, सरलस्वभावः, भोगसाधनस्य गुप्तेन्द्रियस्य नियमनरूपं ब्रह्मचर्यम्, स्वसुखनिमित्तं परस्य अपीडनम् इत्यादि शारीरं तप इत्युच्यते।[80] उद्वेगजनकवाक्यस्य अकथनम्, यथाभूतार्थकथनम्, हितं मनोहारि च वचनम्, गुरुपरम्परया प्राप्तायाः वेदशाखायाः आध्यात्मिकग्रन्थस्य वा अध्ययनम् अध्यापनं चेति सर्वमेतद् वाचिकं तप इत्युच्यते।[81] मानसिकतृप्तिः सन्तोषो वा, सौम्यभावः, निष्प्रयोजनवार्तालापाभावः मौनं वा, स्वस्वविषयेभ्यः इन्द्रियाणां नियमनम्, समीचीनं चिन्तनम् इत्यादि मानसं तपः इत्युक्तम्।[82] भावानुगुणं सिद्धिः इति महात्मनां वचनस्य आशयः।[83]

---

79 'इन्द्रियमनसोर्नियमानुष्ठानं तपः' इति। (नीतिवाक्यामृतम्- १/२२)

80 'देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्...' इति। (भ.गी. – १७/१४)

81 अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्...' इति। (भ. गी. – १७/१५)

82 मनःप्रसादः सौम्यत्वं मौनम्...' इति। (भ. गी. – १७/१६)

83 'यादृशी भावना यस्य सिद्धिर्भवति तादृशी' इति।

शास्त्रविहितानां सज्जनैः स्वाचरणे स्थापितानाम् आचरणानां स्वजीवने अनुष्ठानं हि तपः इति उपनिषदाम् आशयः।[84] धर्मस्यापि लक्षणनिरूपणप्रसङ्गे सदाचार एव धर्मः इत्युक्तं स्मृत्यादिग्रन्थे।[85] मुण्डकोपनिषदि तैत्तिरीयोपनिषदि च शिष्यैः स्वजीवने कथम् आचरणीयम् इति विषये निगदम् उक्तम्। स्वाश्रमविहितं कर्म तपः इति मुण्डकभाष्ये[86], तपः कृच्छ्रादि इति तैत्तिरीयभाष्ये[87] तपः ब्रह्मचर्यादि इति केनोपनिषदः वाक्यभाष्ये[88], कायेन्द्रियमनसां समाधानं तपः इति केनोपनिषदः पदभाष्ये[89] शङ्कराचार्यैः तपसः स्पष्टं निरूपणं कृतम्। अतः श्रीमद्भगवद्गीतायाम् उपनिषदुक्तः अर्थ एव श्लोकप्रसूनैः पुष्पितः इति मन्तव्यम्। उपनिषत्सु तपः ज्ञानलक्षणम् इत्यपि आम्नातम्।[90] शुद्धं ज्ञानं हि ब्रह्मणः तपः। ब्रह्मसाक्षात्कारार्थं तपो हि साधकतमं साधनम् इत्याम्नायते 'तपसा ब्रह्म विजिज्ञासस्व' इति।[91]

---

[84] 'यथायोग्यं सदाचारपालनम्' इति। (तै.उ.शाङ्करभाष्यम्- १/९)

[85] 'आचारः परमो धर्मः' इति।

[86] मु. उ.- १/२/११

[87] तै. उ.- १/९/१

[88] के. उ. वा. भा. - ४/८

[89] के. उ. प. भा. – ४/८

[90] 'तपसा ज्ञानेन, ज्ञानलक्षणं तपः ब्रह्मणः' इति। (मु. उ. १/१/८-९)

[91] तै. उ.- ३/२/१

पुराणानि अवलोकयामः चेत् तत्र अवगम्यते शारीरकश्रमः तपः इति।[92] अत्यन्तं कष्टसाध्यं तपः इत्यपि तत्र तत्र उच्यते।[93] द्वन्द्वसहिष्णुता तपः इत्यपि लक्षणं पुराणेषु अवलोक्यते।[94]

## महाभारते तपसः निर्वचनानि-

पुरुषार्थचतुष्टयविषये परमं प्रामाण्यम् आवहति महाभारतम्। महाभारतस्य माहात्म्यं साक्षात्पद्मपुराणे गीयते 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्'[95] इति। इतिहासपदेन रामायणमहाभारते ग्राह्ये। यद्यपि महाभारतम् इतिहासग्रन्थः तथापि श्रुतिस्मृत्यपेक्षया केनचित् अंशेन अत्र न्यूनता न परिलक्ष्यते। 'महाभारतं पञ्चमो वेद' इत्यस्ति विदुषां भणितिः। महाभारतं स्वकीयज्ञानप्रतिपादनमहिम्ना अध्यात्मशास्त्रेषु मूर्धन्यताम् आवहति। 'लोकाश्च उत्तरोत्तरं मन्दमतयः' इति भगवत्पादानां श्रीमच्छङ्कराचार्याणां गीताभाष्यवचनम् आलोचयामः चेदेव साम्प्रतं महाभारतसदृशग्रन्थानाम् अपेक्षा का इति स्पष्टं प्रतीयते। मनुष्याणां बुद्धिशक्तेः क्षीणताम् अनुभूय लोकांश्च उद्दिधीर्षुः परमकृपालुर्भगवान् त्रिकालदर्शी व्यासः वेदोक्तान् एव अर्थान् प्रतिपिपादयिषुः महाभारतं प्रणिनाय। मोक्षोपायभूतं तपः सलक्षणमत्र प्रपञ्चितं वर्तते। विशिष्य वनपर्वणि, उद्योगपर्वति, शान्तिपर्वणि, अनुशासनपर्वणि आश्वमेधिकपर्वणि च तपसां निरूपणम् अवलोक्यते। तपसां माहात्म्यविषये व्यासमहर्षिः जगाद लोका हि सर्वे तपसा ध्रियन्ते[96] इति। सर्वेषां साधनानां मूलं हि तपः इति महाभारते व्यासस्य वचनम्। तपस्विनः लक्षणं तत्र एवमुक्तं ये मनसा वाक्येन कर्मणा बुद्ध्या च पापकर्माणि न आचरन्ति त एव

---

[92] तपो हि श्रम उच्यते (प. पु. ६/२११)

[93] तपः परमदुष्करम्। (प. पु. १०७/ ३३)

[94] म. पु. १४३/४१, ब्र. पु. २२२/४३

[95] प. पु. - २. ५१/५२

[96] महाभारतम्, वनपर्व- ९१/१९

महात्मानः तपस्विनः इत्युच्यन्ते। शरीरस्य शोषणमात्रेण तपस्विनः न सम्पद्यन्ते।[97] सर्वधर्मेभ्यः परमं साधनं तपः इति स्मृतेर्वचनं श्रीमच्छङ्करभगवत्पादैरपि उद्धृतं तैत्तिरीयभाष्ये। तस्यायम् आशयो यत्तपो हि ब्रह्मणः अत्यन्तं नेदिष्ठम्। तपसा एव लोकत्रयं व्याप्तं तपश्च चैतन्यस्य प्रकाशेन परिव्याप्तम्। अतः मोक्षसाधनत्वेन तल्लक्षणं विचार्यमेव। महाभारते तपसां अनेकानि लक्षणानि प्रोक्तानि। तानि यथाक्रमम् उच्यन्ते-

**ऐकाग्र्यम्-**

अस्मदादीनां चित्तं प्रतिमुहूर्तं धावनस्वभावम्। अतः मोक्षलाभाय चित्तसमाधिरेव प्रथमतया विधेया। चित्तसमाधये यत् प्रथमतः अपेक्षते तद्धि चित्तस्य एकाग्रतासम्पादनम्। चित्तम् अवलम्ब्य एव संसारव्यवहारः अखिलः प्रचलति। व्यवहारे विषयव्यग्रं चित्तम् आत्मचिन्तनार्थं न क्षमते। यतो हि चित्तं विक्षिप्तं बहुषु विषयेषु व्याप्तं च भवति। अतः येन एकाग्रतालक्षणेन साधनविशेषेण अन्तरिन्द्रियस्य मनसः बाह्येन्द्रियाणां च तत्तद्विषयविमुखीभावः प्रत्यगात्माभिमुखित्वं च सम्पाद्यते तदेव परमं तप इति महाभारते उक्तम्।[98]

**शमदमौ-**

साधनषट्कसम्पत्तिमध्ये शमदमौ प्रथमतया गण्येते। अन्तरिन्द्रियनिग्रहः शमः बहिरिन्द्रियनिग्रहश्च दमः इति तयोः शास्त्रसम्मतं लक्षणम्। उभावपि तपस्त्वेन कीर्त्येते महाभारते।[99]

---

97 'ये पापानि न कुर्वन्ति मनोवाक्कर्मबुद्धिभिः...' इति। (महाभारतम्, वनपर्व- २००/९९)

98 'मनसश्चेन्द्रियाणाञ्च ह्यैकाग्र्यं परमं तपः....' इति।

99 'तपो निःश्रेयसं जन्तोस्तस्य मूलं शमो दमः'॥ इति। (महाभारतम्, वनपर्व २०९/५३)

**त्यागादिः-**

त्यागस्य संनतेश्च उत्तमतपस्त्वेन गणनं कृतं शास्त्रेषु। काम्यानां कर्मणां त्याग एव त्यागत्वेन उच्यते गीतासु। 'त्यागो हि पुरुषव्याघ्रः' इत्यादिगीतावचनात् त्यागस्य तपस्त्वं सुतरां ज्ञायते। एवमेव नम्रता विनयः वा उत्तमं तपः। अतः रघुवंशे कालिदासेन अवाचि **ज्ञाने मौनम्** इति। अतः त्यागस्य विनयस्य च उत्तमतपोरूपेण परिगणनं महाभारते अपि कृतम्।[100] यः त्यागं सन्नतिं च पालयति सः ब्रह्मचर्यस्य उपवासस्य च फलं विन्दते।

**ब्रह्मचर्यादयः-**

ब्रह्मचर्यम् अहिंसा च शारीरं तपः, वाङ्मनसोः सम्यक्तया नियमनं मानसं तपः। यः गुप्तेन्द्रियस्य संयमं करोति, परस्य पीडां च न जनयति स एव उत्तमः तापसः इति महाभारते उक्तम्। यः मिथ्याभाषणं न करोति यथार्थं च ब्रूते सोऽपि तापसोत्तमः।[101]

**निष्कामकर्मानुष्ठानम्-**

गुणत्रयवैचित्र्यात् संसारे विविधप्रवृत्तिः दरीदृश्यते। कर्मसु प्रवृत्तिः रजोगुणस्य प्राधान्यात् भवति। प्रवर्तकः चञ्चलस्वभावश्च रजोगुणः इति सांख्यकारिकाकृताम् आशयः। तमोगुणः अस्मासु मूढताम् आपादयति। सत्त्वगुणः प्रकाशकः मोक्षार्थं च अपेक्षितो वर्तते। विवेकः वैराग्यम् इत्यादीनाम् आविर्भावः सत्त्वगुणादेव जायते। अस्मदादीनां प्रवृत्तिः प्रयोजनपूर्विका। प्रयोजनम् अनुद्दिश्य केवलं चित्तशुद्धये ईश्वराराधनधिया वा यत् कर्म क्रियते तत्कर्म निष्कामकर्म

---

100 'त्यागश्च संनतिश्चैव शिष्यते तप उत्तमम्...' इति। (महाभारतम्, शान्तिपर्व २२१/५)

101 'ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते...' इति। (महाभारतम्, शान्तिपर्व- २१७/१७)

इत्युच्यते। तादृशं कर्म रजोगुणस्य तमोगुणस्य च नाशकं सत् तपसे भवति इति महाभारतस्य अनुशासनम्।[102]

**कर्मसन्न्यासः-**

सन्न्यासपदेन एषणात्रयत्यागः विवक्षितः। सन्न्यास एव ज्ञानस्य लक्षणम्। अतः सन्न्यासापेक्षया उत्कृष्टं तपो न विद्यते। सन्न्यासः सर्वापेक्षया परमं तप इति महाभारतस्य आशयः।[103]

**उपवासः-**

निवृत्तिमार्गवर्तिनाम् उपवास एव परमं तपः।[104] उपवासशब्दस्य अयमर्थः अहोरात्रभोजनास्वीकारः। पापकर्मभ्यः विरतो भूत्वा दयाक्षमानसूयाशौचादिसद्गुणैः सह यदवस्थानम् अपि च शास्त्रानुमतनृत्यगीतादिभोगेभ्यो विरतिरेव उपवासः।[105] यथा मलिनं वस्त्रं जलप्रक्षालनात् परं शुद्ध्यति तथैव यः उपवासपूर्वकं तप आचरति तस्य अन्तःकरणं शुद्ध्यति। अपि च तेन शाश्वतिकं परमं सुखम् अवाप्यते इति महाभारते व्यासस्य वचनम्।[106]

**अहिंसादयः-**

अहिंसा, सत्यवचनम्, अक्रौर्यम्, शरीरस्य मनसश्च संयमः, दया एतत्सर्वं तपः।

---

102 'रजस्तमोघ्नं यत् कर्म तपसस्तत् स्वलक्षणम्' ॥ इति। (महाभारतम्, शान्तिपर्व २१७/१६)

103 'संन्यासः परमं तपः' ॥ इति। (महाभारतम्, शान्तिपर्व- १६१/९)

104 'एतेभ्यो हि महाराज तपो नानशनात्परम्' ॥ इति। (महाभारतम्, शान्तिपर्व- १६१/८)

105 'उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह। उपवासः स विज्ञेयः सर्व्वभोगविवर्जितः' ॥ इति। (शब्दकल्पद्रुमे)

106 'मलिनं हि यथा वस्त्रं पश्चाच्छुद्ध्यति वारिणा। उपवासैः प्रतप्तानां दीर्घं सुखमनन्तकम्' ॥ इति। (महाभारतम्, शान्तिपर्व- ३२२/१७)

## लोभादित्यागः-

लोभस्य क्रोधस्य च निग्रहः तपः। लोभः क्रोधश्चेति शरीरस्थौ महान्तौ बलवन्तौ रिपू स्तः। परसम्पदि उत्कर्षं दृष्ट्वा तत्प्राप्तये मनसि इच्छा। तदुक्तं परद्रव्याभिलाषः लोभ इति।[107] क्रोध आत्मनः प्रतिकूलस्थितौ तीक्ष्णगुणस्य प्रबोधः। क्रोधोऽनलतूल्यः अस्ति। क्रोधः विवेकिनः पुरुषस्यापि तत्क्षणे विवेकं नाशयति। तस्माद् महाभारते उक्तं यतिभिः दुःखेन सञ्चितं धर्ममपि क्रोधः हरति इति।[108] क्रोधः पापस्य कारणभूतः। क्रुद्धो गुरोरपि हननं कर्तुं प्रभवेत्। तदुक्तं महाभारते 'क्रुद्धः पापं नरः कुर्यात्क्रुद्धो हन्याद्गुरूनपि'[109] इति। श्रीमद्भगवद्गीतायां नाशकेषु नरकस्य द्वारभूतेषु च त्रिविधकारणेषु लोभः क्रोधः चेति उभौ परिगणितौ। तथाहि गीतावचनं- 'कामक्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्'[110] इति। अतः मन्योः लोभस्य जयः विजयः येन साधनेन सम्भवति तद्धि तपः।

## शुचिता-

निर्मलभाव एव तपः। यदि मनोगतः भावः अनिर्मलः तर्हि वैदिकं कर्म, एकान्तवासः, शरीरशोषणम् एतत्सर्वं साधनं निष्फलं भवेत् इति महाभारतस्य उपदेशः।[111] बाह्यम् आन्तरिकं चेति द्विविधं शौचम् अत्र ग्राह्यम्। तयोः बाह्यं शौचं मृज्जलादिना शरीरप्रक्षालनेन सुलभतया

---

107 'परवित्तादिकं दृष्ट्वा नेतुं यो हृदि जायते। अभिलाषो द्विजश्रेष्ठ स लोभः परिकीर्तितः'॥ इति। (पद्मपुराणम्, क्रियायोगसारः, १६ अध्यायः)

108 'क्रोधो हि धर्मं हरति यतीनां दुःखसञ्चितम्'॥ इति। (महाभारतम्, आदिपर्व- ४२/८)

109 महाभारतम्, वनपर्व- २९/४

110 भ. गी. - १६/२१

111 'अग्निहोत्रं वने वासः शरीरशोषणम्। सर्वाण्येतानि मिथ्या स्युर्यदि भावो न निर्मलः'॥ इति। (महाभारतम्, वनपर्व- २००/९९)

सम्भवति। आन्तरिकं शौचं तु भगवन्नामकीर्तनदानादिसत्कर्मणा मनोगतानां कामादिदोषाणां प्रक्षालनाद्वारा क्लेशेन सम्भवति।

**क्षमा-**

तपस्सु क्षमापि गण्यते। क्षमेति सहिष्णुतापरपर्यायः। परदोषं विलोक्यापि यः न कुप्यति सः क्षमाशीलः। तत्र क्षमा हि शुचिताया अपि कारणम्।[112] क्षमा इति पृथिव्याः पर्यायशब्दः। यतो हि पृथिवी सर्वं सहते। क्षमायाः महत्त्वम् एवमाख्यायते- क्षमा ब्रह्म क्षमा सत्यं क्षमा भूतञ्च भावि च। क्षमा तपः क्षमा शौचं क्षमयेदं धृतं जगत्॥ इति। तेजस्विनां प्राणिनां क्षमा एव तेजः।[113] सत्यवतां क्षमा हि सत्यम्। क्षमा एव यज्ञः। क्षमा एव शमः। दुर्गार्चापरके स्तोत्रे क्षमेति विशेषणं मातुः अम्बिकायाः कृते प्रदीयते।[114]

**सृष्टेः निदानं तपः-**

चेतनः सर्वज्ञः परमात्मा संकल्पपूर्वकं जगत्प्रपञ्चं रचयति। ईश्वरः अपि तपसा संकल्पं करोति। तथा च श्रुतिः- यस्य ज्ञानमयं तपः[115] इति। तपः अत्र ज्ञानलक्षणम्। प्रजापतिः तपसा जगत् ससर्ज। त्रयः लोकाः तपसा सिद्धाः तपसा प्रकाशन्ते।

---

[112] क्षमा ब्रह्म क्षमा सत्यं क्षमा भूतं च भावि च। क्षमा तपः क्षमा शौचं क्षमया चोद्धृतं जगत्॥ इति। (महाभारतम्, आरण्यकपर्व- २९/३७)

[113] 'ज्ञाने मौनं क्षमा शक्तौ' इति। रघुवंशम्- १/२२

[114] 'दुर्गा शिवा क्षमा धात्री स्वाहा स्वधा नमोऽस्तु ते' ॥ इति।

[115] मु. उ.- १/१/९

**तपसां फलम्-**

ताद्दशं प्राप्तव्यं वस्तु जगति दुर्लभं यन्न तपसा सिद्ध्यति। दुरापं वस्त्वपि तपसा सुलभम्। ताद्दशस्य तपसः द्विविधं फलं सम्भावयितुं शक्यते। एकविधं फलं लौकिकम् अन्यविधम् आध्यात्मिकम्। दानादिकर्मणा लोके अपि यत्सुखम् अनुभूयते तद्धि लौकिकम्। आध्यात्मिकं फलं तु चित्तशुद्धिरेव। 'परोक्षं जायते तपः' इति महाभारते। अर्थात् तपसः फलं परोक्षम्। चित्तशुद्धिरेव भगवद्दर्शनं घटयति। महाभारतग्रन्थे तपसां नाना प्रयोजनानि निगदितानि। तद्यथा-

१. **पापक्षयः**- दुरितमेव अस्माकं निःश्रेयसं प्रति प्रधानं बाधकम् अस्ति। ताद्दशं पापं निषिद्धकर्माचरणेन उद्भवति। नित्यानित्यवस्तुविवेकात् हि शुद्धं ज्ञानं जायते। अतः विवेकज्ञानोत्पत्तये पापानां पराभवः अपेक्षितः। पापानां पराभवश्च तपसैव सम्भवति। सद्यः कृतात् पूर्वजन्मार्जितात् वा दुरितात् मोचयति इह जन्मनि कृतं तपः।
२. **उत्कृष्टफलप्राप्तिः**- शुभकर्मणां यत् फलम् उत्कृष्टत्वेन लोके अवगतं तत्सर्वं तपसा एव सिद्धम्। तपसा विविधौषधीनां प्राप्तिर्भवति। आरोग्यप्राप्तिरपि तपसा सिद्ध्यति। आरोग्यं नाम निरोगं शरीरम्। नानाविधाः क्रियाः तपसा सिद्ध्यन्ति। मनसा कल्पितान् विविधान् कामान् तपसैवावाप्तुं शक्नोति मानुषः। दुःखविरोधी सुखस्वरूपः त्रिदिवोऽपि तपसा लब्धुं शक्यते। देवतादिजन्म तपस एव फलभूतम्। एवमेव उत्कृष्टयोनिषु देहप्राप्तिः तपसा सिद्ध्यति। भूमेः राजत्वमपि तपसः फलभूतम्। ज्ञानं, विज्ञानम्, आरोग्यं, रूपं, सम्पत्, सौभाग्यम् इत्यादि सर्वविधं फलं तपसः सौरभम्। अतः तपोबलं परमम् इत्युक्तम्। तपसः प्रभावः दुर्लङ्घ्यः।
३. **अमृतत्वप्राप्तिः**- तपसाम् आत्यन्तिकं प्रयोजनं तु मोक्ष एव। कानिचन साधनानि साक्षात् उपकुर्वन्ति कानिचन परम्परया। तपः चित्तशुद्धिसम्पादनद्वारा मोक्षार्थम् उपकरोति। अत्र अमृतत्वम् आपेक्षिकं न विवक्षितम्। आत्यन्तिकदुःखोच्छेदः परमानन्दावाप्तिश्च अत्र

विवक्षिता। जीवाभिन्नब्रह्मतत्त्वसाक्षात्कारात् एव अमृतत्वम्। तपसा तादृशम् अमृतत्वपदवीम् आरूढः सर्वज्ञो भवति। सर्ववस्तुविषयकं ज्ञानं लभते इत्यर्थः। तपोधनाः सर्वज्ञाः इति शास्त्राद् विनिश्चयः।

**उपसंहारः-**

आत्यन्तिकदुःखनिवृत्तिः परमानन्दावाप्तिश्च मोक्षः। मोक्षः साधनसापेक्षः। मोक्षस्य उपायाः नाना सन्ति। केचन कर्मफलम् अनुसन्धाय अविगीतवैदिककर्मानुष्ठानेन स्वर्गादिफलं भूक्त्वा क्षीणे पुण्ये मर्त्यलोकं प्रविशन्ति।[116] कर्मफलम् अननुसन्धाय केवलं कर्म कुर्वाणा निष्कामकर्मिण उपासकाः अर्चिरादिमार्गेण स्वेष्टलोकं प्राप्य अधिकारानुसारं फलम् उपभुञ्जते।[117] एताभ्यां विलक्षणः एषणात्रयसन्न्यस्तः परिब्राजकः त्यागेन आत्मानं पालयन्ति। अतोऽखिलबन्धविनिर्मुक्तस्य तस्य लोकान्तरगमनं विनापि अस्मिन्नेव शरीरे मोक्षः सिद्ध्यति।[118] इहतत्र सर्वत्र अधिकारिभेदेन व्यवस्था भिद्यते। परन्तु तपसि सर्वेषाम् अधिकारः अस्ति। सर्वलोकसाधारणं साधनम्। तपःसञ्चयः विशिष्टः द्रव्यसञ्चयात्। तपः दुरितदूरीकरणेन चित्तशुद्धिं घटयति। क्षमा, सत्यम्, दानम्, उपवासः, शमदमौ, तितिक्षा, विनयः एतत्सर्वमेव तपः। तपः मनुष्येषु अत्यन्तं दुर्लभम्। तपोधना हि ऋषयः।

---

[116] धूममार्गः अत्र वर्णितः।

[117] निष्कामकर्मिणाम् उपासकानां गतिः।

[118] ज्ञानिनां गतिः।

## सन्दर्भग्रन्थसूची-


१. "ईशादि नौ उपनिषद्" (शाङ्करभाष्यार्थ), एकादश संस्करणम्, गीताप्रेस, गोरखपुर, २०७१ विक्रमाब्दः.

२. आचार्यः, शङ्करः, "उपनिषद्भाष्यम्" (भागत्रयम्), एस् शास्त्री, सुब्रह्मण्यः, (सम्पादकः), द्वितीयसंस्करणम्, श्रीदक्षिणामूर्ति मठ प्रकाशन, २००४.

३. महर्षिः, पतञ्जलिः, "पातञ्जलयोगदर्शनम्", स्वामी, श्रीब्रह्मलीनमुनिः, (सम्पादकः), तृतीयसंस्करणम्, चौखम्बा प्रकाशन, २०१०.

४. आचार्यः, शङ्करः, "ब्रह्मसूत्रशांकरभाष्यम्", आचार्यः, शास्त्री, जगदीशः, (सम्पादकः), षष्ठसंस्करणम्, मोतीलाल बनारसीदास, २०१८.

५. महर्षिः, वेदव्यासः, "महाभारतम्" (षट्-खण्डोपेतम्), सचित्रं सरलहिन्दी-अनुवादसहितम्, गीताप्रेस, गोरखपुर, २०२१.

६. योगीन्द्रः, सदानन्दः, "वेदान्तसारः" (विद्वन्मनोरञ्जनीसमन्वितः), प्रथमसंस्करणम्, मोतीलाल बनारसीदास, २०१२.

७. मिश्रः, वाचस्पतिः, "सांख्यतत्त्वकौमुदी" ('कृष्णा'-संस्कृत-हिन्दीव्याख्याद्वयोपेता), पण्डितः, गौड़ः, ज्वालाप्रसादः(व्याख्याकारः), चौखम्बा सुरभारती प्रकाशनम्, वाराणसी, २०१९.

८. डॉ., पाण्डेयः, मुरलीधरः, शाङ्करवेदान्तकोशः (कुलपतेः डॉ. मण्डनमिश्रस्य प्रस्तावनया समलङ्कृतः), सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, १९९८.

९. "श्रीमद्भगवद्गीता" (शांकरभाष्य हिन्दी-अनुवादसहित), गीताप्रेस, २०७० विक्रमाब्दः.


## संकेताक्षरसूची-

१. तै. उ.- तैत्तिरीयोपनिषत्

२. भ.गी.- भगवद्गीता

३. मनु.- मनुस्मृतिः

४. महा. शान्ति.- महाभारतम्, शान्तिपर्व

५. कुमार.- कुमारसम्भवम्।

६. मु.उ.- मुण्डकोपनिषत्

७. तै.उ.- तैत्तिरीयोपनिषत्

८. के.उ.वा.भा.- केनोपनिषत्, वाक्यभाष्यम्

९. के.उ.प.भा.- केनोपनिषत्, पदभाष्यम्

१०.प.पु.- पद्मपुराणम्

११.पा.यो.व्या.भा.- पातञ्जलयोगव्यासभाष्यम्

१२.म.पु.- मत्स्यपुराणम्

१३.ब्र.पु.- ब्रह्मपुराणम्

१४.ब्र. सू.- ब्रह्मसूत्रम्

# याष्ककृतनिरुक्ते दैवतकाण्डस्य समालोचनात्मकमध्ययनम्

**कृष्ण कुमार पाण्डेयः**
केन्द्रीयसंस्कृतविश्वविद्यालयः
गङ्गानाथझापरिसरःप्रयागराजः

चत्वारो वेदाः जगति प्रसिद्धाः विद्यन्ते। तत्रापि षड्वेदाङ्गानि वेदानुपकरोति।षट्ष्वङ्गेषु श्रोत्रस्थानीयमिदं निरुक्तम् आचार्यैरवादि यथा-**निरुक्तं श्रोत्रमुच्यते**[119]। भवन्तः विदन्त्येव चतुर्दश निरुक्तकाराः बभूवुः तेष्वन्यतमो अयं याष्कः प्रसिद्धश्च। चतुर्दशाध्यायात्मक अयं ग्रन्थः व्यवस्थायि ।तत्र त्रिषु काण्डेषु विभक्तोऽयं ग्रन्थः( निघण्टु,नैगम,दैवत )। अस्मिन् ग्रन्थे मुख्यतः वैदिक शब्दानां विश्लेषणं निरुक्ति कृता वर्तते। तत्र दैवतकाण्डम् आचक्षते **अथातो दैवतम्**[120] अत्र अथ आनन्तर्यार्थकः निघण्टु ,नैगम काण्डानन्तरस्य ज्ञापकं भवति। इदानीं दैवविशेष काण्डमारभते **देवोदानाद्वा दीपनाद्वा**[121] **इति**

**तद्यानि नामानि प्राधान्यस्तुतीनां तद् दैवतमित्याचक्षते –**

अर्थात् यानि नामानि प्राधान्यस्तुतीनां अग्न्यादीनां देवपत्न्यान्तानां देवतानां तद्दैवतप्रकरणमाचार्या आचक्षते। निरुढा हीयमेतस्मिन्प्रकरणे संज्ञेत्यभिप्रायः। या प्रकरण उपन्यासेन एव अवसरप्राप्ता, एकैकस्याः देवताया अग्यादेः, उपगम्योपगम्य परीक्षा वर्तिष्यत इति वाक्यशेषः। परीक्षा च तन्नाम-व्युत्पत्ति-तत्-स्तुत्युदाहरण-तन्निर्वचनात्मिकात्र बोध्या इति। यमर्थं कामयमानः, ऋषिर्यस्यां देवतायामभिष्टुतायाम् , आर्थपत्यम् अर्थप्रतिभावं स्वामित्वमिच्छन् अमुष्या देवतायाः प्रसादेन अहमुष्यार्थस्य पतिः भविष्यामि इत्येतां बुद्धिं पुरोधाय स्तुतिं प्रयुंक्ते तद्दैवतः तद्दैवताकः एव स मन्त्रो भवति। एतन्मन्त्रे देवता ज्ञानलक्षणम्।

---

119 पाणिनीयशिक्षा

120 निरुक्त 7-1

121

**तास्त्रिविधा ऋचः। परोक्षकृताः। प्रत्यक्षकृताः। आध्यात्मिक्यश्च** [122]**।**

तत्र तस्मिन् त्रैविध्ये परोक्ष-कृतानामृचामेतल्लक्षणं भवति। नामविभक्तिभिः नाम्नः प्रातिपदिकस्य एतेन तिङां व्युदासः। आख्यातस्य तिङ्न्तस्य।

प्रथमो यथा-**तत्र परोक्षकृताः**

**सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्च आख्यातस्य ।**

उदाहरणं यथा -**इन्द्रो दिव इन्द्र ईशे पृथिव्याः**[123] इन्द्रो दिवः स्वर्गस्य ईशे ईष्टे। इद्र एव पृथिव्याः ईष्टे। प्रथमायामेतदुदाहरणम्। स्वर्गस्य पृथिव्याश्चेन्द्र एव प्रधानः स्वामीत्यर्थः। **इन्द्रमिद् गाथिनो बृहत्** [124] हे गाथिनः सामगाः इन्द्रमिद् इन्द्रमेव यूयं बृहता साम्ना अभिष्टुत। **इन्द्रेणैते तृत्सवो वेविषाणाः** [125]इन्द्रेणैते मेघा वेविषाणा व्याप्यमानाः, तृत्सवो दारयितव्याः। **इन्द्राय साम गायत**[126] हे उद्गातारः इन्द्राय बृहत् साम गायत। इत्यादीनि उदाहरणानि विभक्ति सम्बद्धानि सन्ति।

**अधुना प्रत्यक्षकृत मन्त्रलक्षणमुच्यते –**

**अथ प्रत्यक्षकृताः मध्यमपुरुषयोगाः त्वमिति एतेन सर्वनाम्ना**[127] ।

---

[122] निरुक्त 7-1

[123] ऋग्वेद 10-76-10

[124] ऋग्वेद 1-71

[125125] ऋग्वेद 1-18-15

[126] ऋग्वेद 8-75-1

[127] निरुक्तम् 7-1

मध्यम पुरुषेण ये संयुक्ता: ते प्रत्यक्षकृताः त्वमिति। सर्वनाम्ना संयुक्ता: ते च प्रत्यक्षकृताः यत्र त्वमित्येवं श्रूयमाणं भवति तत्राद्यविद्यमानोपि मध्यमः पुरुषोऽध्याहार्य:। यत्र तु मध्यमः पुरुषः श्रूयते तत्राविद्यमानमपि त्वमिति एतेन सर्वनामाध्याहार्यम्।

**यथा- त्वमिन्द्र बलादधि**[128] **वि न इन्द्र मृधो जहि** [129]

हे इन्द्र! त्वं बलादधिजात: बलेनेन्द्रत्वं प्राप्त:। हे इन्द्र! त्वं विजयः नाशय, नोऽस्माकं एतान् मृध: मृधकर्तृन् शत्रून्। अथापि क्वचित् प्रत्यक्षकृताः स्तोतारो भवन्ति परोक्षकृतानि स्तोतव्यानि। युष्मत्प्रयोगैर्हि क्वचिद्स्तोतार: सम्बध्यते प्रत्यक्षमक्षि गोचरं परोक्षमक्षिभ्यां परमिति विवेकः। हे स्तोतार:! मा इन्द्रात् अन्यद् किञ्चिदपि विशवसंसपत् अभिष्टुत। कण्वा अभिप्रगायत्। हे कण्वाः कण्वगोत्रीयाः ऋत्विज इन्द्रमभिप्रगायत। इत्यादीन्युदाहरणानि लभन्ते। **आध्यात्मिक मन्त्राः -अथाध्यात्मिक्यः उत्तमपुरुषयोगाः। अहमिति चैतेन सर्वनाम्ना**[130]**।** उत्तमेन पुरुषेण या ऋचो युक्ताः ताश्च आध्यात्मिक्यः।

**यथा त्रयमाध्यात्मिकम् -**वैकुण्ठा नाम आसुरि बभूव , तस्याः किल तपसः प्रभावेणापत्यत्वमिन्द्र आजगाम् स बैकुण्ठो नाम बभूव। तस्यात्म – स्तुति – संयुक्तमेवमादि ब्रह्मप्रादुरभवत्। अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि संजयामि शाश्वतः। मां हवन्ते पितरं न जनितवोऽहं दाशुषे विभजामि भोजनमिति। किञ्चाहमेव पतिः, अहमेव च शत्रुभ्यः सकाशात् समस्तानि धनानि संयजामि। लवसूक्ते स एव लवो ब्रवीति। एवञ्च एवञ्च मे मनो वर्तते। गाञ्च अशवञ्च सानयाम् सम्भोजयेयमेतान् यजमानान्। कुवित् बहु सोमस्य अपामिति। अहंरुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः। अहं मित्रावरुणोभा बिभर्म्यमिन्द्राग्नी अहमश्विनोभा। इति। वागारम्भणीये वागेव ब्रवीति– अहमेव रुद्रेभिः वसुभिः आदित्यैः

---

128 ऋग्वेद 10-153-2

129 ऋग्वेद 1-152-4

130 निरुक्तम् 7-1

विश्वेदेवैः विश्वैश्च देवैः साकंभूता चरामि स्तुतिरुपेण ।अहमेव मित्रावरुणा-मित्रावरुणौ उभा-उभावपि इन्द्राग्नी अश्विना -अश्विनौ च उभा -उभावपि बिभर्मि हविषा मत्पूर्वकं हविः सम्प्रदानं सर्व देवताम्य इत्यभिप्रायः ।

**परोक्षकृताः प्रत्यक्षकृताश्च मन्त्रा भूयिष्ठाः । अल्पश आध्यात्मिकाः** [131]।

भूयिष्ठाः-अतिबहवः। अल्पशः -अत्यल्पाः। इदानीं द्वितीयः पादः समारभते। **तिस्त्रः एव देवता इति नैरुक्ताः**[132]**।** अग्निः पृथीविस्थानः वायुर्वेन्द्रो वान्तरिक्षस्थानः। सूर्यो द्युस्थानः ।अन्यत्रापीदमुच्यते प्रजापतिर्वै त्रीन्महिम्नो असृजताग्निं वायुं सूर्यम्। प्रजापतिर्लोकान् अभ्यतपत् तेभ्योऽभितप्तेभ्यो रसान्प्रावहदग्निं पृथिव्या वायुमन्तरिक्षात्सूर्यं दिव इति। तासां माहाभाग्यादेकैकस्याअपि बहूनि नामधेयानि भवन्ति। तासामेव-तिसृणामग्न्यादीनां माहाभाग्यात्-ऐश्वर्ययोगात् , एकात्मनामनेकधा विकुर्वन्तीनामेककस्याः प्रतिविकारं जातवेदाः, वैश्वानरः वरुणः, रुद्रः, अश्विनौ उषा इत्येवमादीनि बहूनि नामधेयानि भवन्ति। अपि वा कर्मपृथक्त्वात् । यथा होताध्वर्युर्ब्रह्मेद्गातेत्यप्येकस्य सतः ।अपि वा पृथक्त्वहेतुको नामधेयलाभः स्यात् । यथा-होता , अध्वर्यु , ब्रह्मा , उद्गाता -इति एकस्यापि सतो नान-नामानि भवितुमर्हति। अपि वा पृथगेव स्युः। पृथग्धि स्तुतयो भवन्ति। अपिवा पृथक् पृथक्-अत्यन्तभिन्ना एवौत्पत्तिकेन भेदेन स्युरिति याज्ञिका आहुः। हीति हेतौ , यस्मात् पृथक् पृथक् अग्न्यादीनां स्तुतयो भवन्ति। पृथगग्नेः-अग्निमीडे इत्येवमाद्याः। पृथग्जातवेदसः प्रनूनं जातवेदसम् । पृथक् सूर्यस्य-हरिद्भिः। तदनुपपन्नं पर्यायवचनत्वे तेषाम्। तस्मात्स्तुति-नियमात्पश्यामः। पृथक्पृथग्निवैश्वानरप्रभृतय इति। तथाभिधानानि यथैव हि स्तुति-भेदात् स्तुत्यभेदः। एवमेवाभिधानभेदादभिधेयभेदोऽपि भवितुमर्हति। नैकस्यानेकाभिधायिता। आख्याह्येभिधानं त्वेत्यमरादभिधानं नाम।

---

[131] निरुक्तम् 7-1

[132] निरुक्तम् 7-2

**अथ समानार्थत्व-साधनम्**

यथो एतत्कर्मपृथक्त्त्वादिति बहवोऽपि विभज्य कर्माणि कुर्युः। यथो एतत् यतत् यत्पुनरेतदुक्तम्, कर्मपृथक्त्त्वादिति। अनैकान्तिक एव दृष्टान्तः। दृष्टो हि प्रकृतिभेदात् प्रकृतिकर्मभेदः। तत्र तस्मिन् पृथक्त्त्वे सति संस्थानैकत्वं च उपपत्तित ईक्षितव्यम् ।सहस्थानतया एकत्वं स्थानैकत्वम्। सम्भोगो नाम इतरेतरोपकारित्वम्, समानकार्यतेत्यर्थः। तच्च पुनः पुनर्भिन्नस्थानानामपि भवति। यथा पृथिव्याः पर्जन्येन च वायवादिभ्यां च संभोगः।

**अथ आकारचिन्तनं देवतानाम्** [133] **।**

याज्ञिक पक्षादनन्तरमिदमारब्धम् आकारचिन्तनं देवतानामिति ।

**पुरुषविधाः स्युरित्येकम् ।**[134]

किमाकारस्य चिन्त्यते? किमस्ति उत नास्ति? इह द्विविधा आकारिणोऽर्थाः चेतनाश्चाचेतनाश्च। तत्र चेतना मनुष्यादयः। अचेतनाश्च पाषाणादयः। तत्रैतद्भवति – किममी मनुष्यादिवच्चेतना उत् पाषाणादिवदचेतना? तत्र पुरुषविधाः स्युरित्येकं मन्त्रेषु दर्शनम्। पुरुषप्रकाराः पुरुषविग्रहा इत्यर्थः।

**चेतनावद्वद्धि स्तुतयो भवन्ति ।**

कोऽत्र हेतुः ?यस्माच्चेतनावतामिव स्तुतयो देवतानां मन्त्रेषु भवन्ति तस्मात्। पुरुषाकारविग्रहा इति निश्चीयते। यथैव पौरुषविध्यमुपपद्यते चेतनावत्सदृश स्तुतिभिः। तत्पौरुषविध्यम् प्रति ताः स्तुतयः कारणं भवन्ति। एवमभिधानानि नामान्यपि चेतनावतामिवैव।

---

133निरुक्तम् 7-2

134 निरुक्तम् 7-2

**तिस्रः एव देवता इत्युक्तं पुरस्तात्। तासां भक्तिसाहचर्यं व्याख्यास्यामः।**[135]

भक्तिश्च साहचर्यञ्च भक्तिकृतं वा साहचर्यमिति । लोकादीनामेवाग्न्यादिभिर्भनं भक्तिः-सहचरभावः साहचर्यम् ।

**अथैतान्यग्निभक्तीनि। अयं लोकः। प्रातः सवनम्। वसन्तः। गायत्री। त्रिवृत्स्तोमः रथन्तरं साम। ये च देवगणाः समाम्नाताः प्रथमे स्थाने। अग्नायी पृथिवीलेति स्त्रियः।**

अथेति विषेशाधिकारे। अग्निं भजन्ते, अग्निना वा भज्यन्ते इत्यग्निभक्तीनि। अथास्यकर्म। वहनं च हविषामावाहनं च देवतानाम्। यच्च किञ्चिद् दार्ष्टिविषयकमग्निकर्मैव तत्।

यथा- **पृषा त्वेतश्च्यावयतु प्रविद्धाननष्टपशुर्भुवनस्य गोपाः। स त्वैतेभ्यः परि ददत्पितृभ्योऽग्निर्देवेभ्यः सुविदत्रियेभ्यः** [136] **।**

**अथैतानीन्द्रभक्तीनि। अन्तरिक्षलोकः। माध्यन्दिनसवनम्। ग्रीष्मः। त्रिष्टुप् ।पञ्चदशस्तोमः बृहत्साम। ये च देवगणाः समाम्नाता मध्यमे स्थाने याश्च स्त्रियः।**

देवगणाः महदादयः। स्त्रियः-आदित्याद्याः स्पष्टमन्यत्। अथास्यकर्म रसानुप्रदानं वृत्रवधः। या च का च बलकृतिरिन्द्रकर्मैव तत्।

**अथैतान्यादित्यभक्तीनि। असौ लोकः। तृतीयसवनम्। वर्षा। जगती। सप्तदशस्तोमः। वैरुपं साम। ये च देवगणाः समाम्नाता उत्तमे स्थाने याश्च स्त्रियः।**

अथास्यकर्म रसादानं रश्मिभिश्च रसधारणम्। यच्चकिञ्चित् प्रह्वलितं आदित्यकर्मैव तत्। चन्द्रमसा वायुना संवत्सरेणेति संस्तवः।

**सन्दर्भग्रन्थाः-** पाणिनीयशिक्षा, निरुक्तम्, ऋग्वेदः

---

[135] निरुक्तम् 7-3

[136] ऋग्वेदः 10-17-3

# मुण्डकोपनिषदीय-शिक्षापद्धतिः वर्तमान-शिक्षापद्धतिश्च

**Nayan Bala Das**
Assistant Professor
Department of Sanskrit
Balurghat Mahila Mahavidyalaya
Balurghat, Dakshin Dinajpur
West Bengal-733101 (India)

**शोधसारांशः (Abstract)**

"**विद्यया विन्दतेऽमृतम्**", "**विद्ययामृतमश्नुते**" इति श्रूयते। अत्र विद्याशब्देन यद्यपि तत्त्वज्ञानं स्वीकृतं तथापि शिक्षार्थे उपचरितोऽयं शब्दः। शिक्षया मानवानां बालकानां च सर्वतोमुखी विकासः सम्भवति। मुण्डकोपनिषदनुसारेण "द्वे विद्ये वेदितव्ये। परा चैवापरा च।" इति। तत्र अपरा इत्युक्ते वेदाः वेदाङ्गानि च। किञ्च परा इत्युक्ते यया तदक्षरमधिगम्यते। विद्या एव ज्ञानावाप्तिसाधनम्। ज्ञानेनैव ब्रह्मपदस्य साधुदर्शनात् तदभिमुखत्वम्, तेन च मोक्षाधिगमो भवति। शिक्षया अपि अर्थप्राप्तिः, यशः, व्यवहारज्ञानं, साहसं, धैर्यम्, मोक्षप्राप्तिश्च भवितुमर्हति। शिक्षा जन्मनः आरभ्य मृत्युं यावत् प्रचलन्ती प्रभावयति।

गुरुपरम्परया एव शिष्यस्य औन्नत्यमपि आसीत्। प्राप्तविद्यां स्वयमेव स्वार्थाय उपयोगं न कृत्वा परेषां कृते उपयोगार्थं शिष्येभ्यः यच्छन्ति स्म। एतदेव उपनिषत्काले आसीत्। आधुनिकलौकिकशिक्षां प्राप्तुं प्रत्येकस्यापि विषयज्ञानस्य कृते प्रत्येकं गुरुं चित्वा ज्ञानं प्राप्नुवन्ति छात्राः। पुरातनकाले एक एव गुरुः सर्वान् विषयान् पाठयति स्म। आधुनिककालस्य शिक्षायाः रक्षणं तु शिक्षाक्षेत्रैः भवन्ति। केचन एव छात्राः वेद-वेदाङ्गशास्त्राणि गुरुमुखात्, गुरुसेवया च अध्ययनं कुर्वन्ति। उपनिषत्काले शिक्षणं छात्रकेन्द्रितमासीत्। आधुनिकशिक्षा अपि छात्रकेन्द्रितशिक्षारूपेण विद्यते। किन्तु बहुत्र शिक्षणं छात्रकेन्द्रितरूपेण न प्रचलति।

आधुनिकशिक्षायाः उद्देश्यं तु ऐहिकसम्बद्धमेव विद्यते। यथा– ज्ञानप्राप्तिः, धनार्जनम्, समूहौन्नत्यम् इत्यादयः। मोक्षप्राप्त्यात्मकोद्देश्यानि तु वैदिकशिक्षायाम् एव विद्यते। सम्प्रति अस्याः प्रासङ्गिकता न विद्यते। आधुनिककाले छात्राः विद्यां प्राप्तुं गृहादेव विद्यालयमागच्छन्ति।

प्राचीनकाले शिष्याः यावत् विद्याभ्यासकालो भवति तावत् गुरोरधीने एव भवन्ति स्म। तेन गुरोः समीपे उत्तमाभ्यासैः तत्रस्थोन्नतवातावरणे बहून् उत्तमविषयान् ते ज्ञातुं समर्थाः अभूवन्।

छात्राणां समाजस्य च सुष्ठु जीवनयापनाय सफलतायै च प्राधान्येन श्रुत्यधिष्ठितशिक्षा आनुकुलिकपरिवर्तनेन आश्रयणीया। यस्य राष्ट्रस्य शिक्षाव्यवस्था यथा समुन्नता तद्राष्ट्रं तदनुगुणं प्रगतिपथमवतरतीति वक्तुं शक्यते। प्राचीनकाले भारतीयविद्वांसः शिक्षाविकासाय सर्वदा सर्वथा च प्रयतितवन्तः।

**मूलविन्दवः –** शिक्षा, शिक्षोद्देश्यम्, शिक्षणविधिः, गुरुः, शिष्यः, अनुशासनम्, पाठ्यक्रमः, गुरुपरम्परा।

मानवः श्रेष्ठः जीवो भवति। अतस्तस्य धर्मः सर्वेषु प्राणिष्वपि श्रेष्ठो भवति। तस्य अधिगमे रुचिः अन्यप्राणिनामपेक्षया अधिका च भवति। तेन अधिगमः मानवानां साधारणधर्म इति। अतएव मानवानामधिगमे जिज्ञासा प्रबलायते।

शिक्षया मनुष्याणां मनुष्यता सत्स्वभावश्च वर्धते तथा विपरीतः स्वभावो नश्यति। तत्रान्यतमः उपायः वर्तते मननम्। मननात् मनुष्यः इति वक्तुं शक्यते। अनेन मननेन सदसद्विवेकः मनुष्यस्य जायते। इत्थं स्वामिविवेकानन्देन उक्तं यत् - सच्चरित्रनिर्माणमेव शिक्षा इति।

## शिक्षा

शिक्ष्-विद्योपादाने इति धातोः "गुरोश्च"[137] इति सूत्रेण विहितम् अप्रत्ययं विधाय शिक्षाशब्दः निष्पादितः। शिक्ष्यते इति व्युत्पत्तिः। अनया योगव्युत्पत्त्या शिक्षाशब्देन शिक्षणमित्यर्थः लभ्यते। वेदाङ्गे शिक्षायां शिक्षाशब्दः रूढः। शोधपत्रेऽस्मिन् शिक्षाशब्दः यौगिकार्थे गृहीतः। अतएव शिक्षायाः समानार्थकं पदं भवति विद्या इति। तथा च श्रूयते –

---

137 अष्टाध्यायी – 3/2/103

“विद्यया विन्दतेऽमृतम्”[138], “विद्ययामृतमश्नुते"[139] इति। अत्र विद्याशब्देन यद्यपि तत्त्वज्ञानं स्वीकृतं तथापि शिक्षार्थे उपचारितोऽयं शब्दः। शिक्षया विना तत्त्वज्ञानस्यासम्भवत्वात्। शिक्ष्यते हि गुरुणा तत्त्वमस्यादि महावाक्यार्थः। शिक्षया मानवानां सर्वतोमुखी विकासः सम्भवति। उक्तं यथा सुभाषितरत्नभाण्डागारे –

**विद्या ददाति विनयं विनयाद्याति पात्रताम्।**
**पात्रत्वाद्धनमाप्नोति धनाद्धर्मः ततः सुखम्।।**[140]

अनेन श्लोकेन ज्ञायते यत् प्राचीनकाले शिक्षायाः अन्तिमं लक्ष्यमासीत् सुखम् (मोक्षप्राप्तिः) इति। किन्तु वर्तमानकाले तु छात्राः “पात्रत्वाद्धनमाप्नोति” इति धनार्जनकार्यपर्यन्तमेव शिक्षायाः लक्ष्यं स्वीकुर्वन्ति। या शिक्षा धनार्जनार्थमेव उपकारकं भवति सैव शिक्षा इदानीं छात्रेभ्यः अधीयते। अधीयमानया शिक्षया अन्तिमप्रयोजनान्वेषणमेव न कुर्वन्ति आधुनिकाः। केवलं जीविकार्जनार्थं प्रपञ्चेऽस्मिन् इदानीं शिक्षां प्राप्नुवन्ति। किन्तु प्राचीनकाले शिक्षायाः परमं प्रयोजनं कैवल्यस्य मोक्षस्य वा प्राप्तिरासीत्।

शिक्षायाः सम्प्रदानात्पूर्वं यत् शिक्ष्यते तस्याचरणं शिक्षकेन अध्यापकेन च कर्त्तव्यम्, नोचेत् शिक्षा निष्फला जायते। एवंविधशिक्षकः आचार्यशब्देन व्यपदिश्यते। तथा च श्रूयते –

**आचिनोति हि शास्त्रार्थान् आचारे स्थापयत्यपि।**
**स्वयमाचरते यस्तु आचार्यः स उच्यते।।**[141]

विद्यैव ‘शिक्षा’ इति तैत्तिरीयोपनिषदि वर्णितमस्ति। अत्र विद्याशब्दः विद्-ज्ञाने इति धातोः निष्पन्नो वर्तते। विद्याशब्दस्य अर्थः अन्वेषणम् अवगमनं वा इत्यस्ति। सर्वार्थसाधिकेयं

---

138 केनोपनिषद् – 2/4

139 ईशोपनिषद् - 11

140 सुभाषितरत्नभाण्डागारः

141 संस्कृतनिरुक्तकोशः – पृ. 29

विद्या प्राक्काले ज्ञानं ज्ञानार्थमिति उद्देश्यमाश्रित्य एव आसीत्। वेद-शास्त्र-विज्ञानादीनां साध्वनुशीलनं तत्त्वार्थज्ञानं चेति विद्यापदेन स्वीक्रियते।

मुण्डकोपनिषदनुसारेण "द्वे विद्ये वेदितव्ये। परा चैवापरा च।"[142] इति। तत्र अपरा इत्युक्ते वेदाः वेदाङ्गानि च। किञ्च परा इत्युक्ते यया तदक्षरमधिगम्यते। यया विद्यया लौकिकं ज्ञानं जायते, सा अपरा विद्या। यया च अक्षरब्रह्मविषयकं ज्ञानं जायते, सा परा विद्या इत्युच्यते। विद्या एव ज्ञानप्राप्तिसाधनम्। ज्ञानेनैव ब्रह्मपदस्य साधुदर्शनात् तदभिमुखत्वम् तेन च मोक्षाधिगमो भवति।

**शिक्षायाः उद्देश्यानि**

शिक्षायाः उद्देश्यानि भागद्वयेन विभाजयितुं शक्यते। तद्यथा – 1. वैयक्तिकोद्देश्यानि 2. सामाजिकोद्देश्यानि च।

**वैयक्तिकोद्देश्यानि–** वैयक्तिकोद्देश्येषु कानिचन प्रमुखानि उद्देश्यानि भवन्ति- शारीरिकविकाशः, मानसिकविकाशः, चारित्रिकविकाशः, आध्यात्मिकविकाशः, सांस्कृतिकविकाशः, व्यक्तित्वविकाशः, वैज्ञानिकाभिवृत्तेर्विकाशः, व्यवसायिककौशले उन्नयनम्, जीवनयापनकलायां प्रावीण्यम् प्रभृतीनि।

वैयक्तिकोद्देश्येषु द्वे विशिष्टोद्देशे स्तः। यथा – आत्माभिव्यक्तिः आत्मानुभूतिश्च।

**सामाजिकोद्देश्यानि –** सामाजिकोद्देश्येषु कानिचन अन्यतमोद्देश्यानि भवन्ति – जनशिक्षायाः व्यवस्था, समाजवादिसमाजस्य स्थापना, सामाजिकदोषाणां समाप्तिः, सामाजिकदायित्वभावना, उदात्तकार्यस्य भावना, नेतृत्वगुणानां विकाशः, लोकतन्त्रस्य विकाशः, नागरिकतायाः विकाशः, भावात्मकैक्यस्य प्राप्तिः, अन्तरसांस्कृतिकावबोधस्य विकाशः, अन्तर्राष्ट्रियज्ञानस्याभिवृद्धिश्च।

---

[142] मुण्डकोपनिषद् – 1/1/4

**मुण्डकोपनिषदि वर्णितानि शैक्षिकतत्त्वानि तथा साम्प्रतिक-शिक्षापद्धतिः –**

**गुरुपरम्परा शिक्षायाः संरक्षणञ्च** – मुण्डकोपनिषदः प्रथममुण्डके प्रथमखण्डे द्वितीयः मन्त्रः भवति -

**अथर्वणे यां प्रवदेत ब्रह्मा अथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम्।**
**स भारद्वाजाय सत्यवहाय प्राह भरद्वाजोऽङ्गिरसे परावराम्।।**[143] इति।

अत्र श्रुतिपरम्परा उच्यते। अथर्वा ब्रह्मविद्याम् अङ्गिरे उपदिष्टवान्। अङ्गिरः भरद्वाजकुलजाताय सत्यवहाय उपदिष्टवान्। परम्परया आगतविद्यामिमां भरद्वाजः अङ्गिरसे उपदिष्टवान्। तस्मिन् काले शिक्षायाः संरक्षणं गुरुपरम्परा-माध्यमेण श्रुतिपरम्परया कृतमासीत्। तदा गुरोः सम्मानाय गुरुपरम्परायाः ध्यानमासीत्। एवं गुरुपरम्परया एव शिष्यस्य औन्नत्यमपि आसीत्। प्राप्तविद्यां स्वयमेव स्वार्थाय उपयोगं न कृत्वा परेषां कृते उपयोगार्थं शिष्येभ्यः यच्छन्ति स्म। इयमेव परम्परा आसीत् उपनिषत्काले।

वर्तमानयुगस्य शिक्षायाः संरक्षणं तु शिक्षाक्षेत्रैः भवति। वर्तमाने गुरुपरम्परा लुप्तप्रायः, केचन छात्राः एव वेद-वेदाङ्गशास्त्राणि गुरुमुखात् गुरुसेवया च अध्ययनं कुर्वन्ति। ते पुरातनैः कैश्चित् विधानैः पाठशालासु गुरुपरम्परामनुकुर्वन्तीति।

**प्रश्नकरणं छात्रकेन्द्रितशिक्षणं च** – मुण्डकोपनिषदः प्रथममुण्डके मथमखण्डे तृतीयमन्त्रः अस्ति यत् -

**शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ।**
**कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति।।**[144]

अत्र गुरुमङ्गिरसं शिष्यः शौनकः विधिवदुपसन्नः पृच्छति – किं विज्ञाते सर्वमिदं विज्ञातं भवति? इति। अत्र छात्राणां कृते प्रश्नकरणस्य अवकाशप्रदानमासीदिति ज्ञायते। शिक्षा न केवलं विवरणात्मिका अपि तु गुरुशिष्ययोः मध्ये चर्चापूर्वकरूपेणापि आसीदिति ज्ञायते।

---

143 मुण्डकोपनिषद् – 1/1/2

144 मुण्डकोपनिषद् – 1/1/3

छात्राणां सन्देहनिवर्तनाय गुरुः अवकाशमयच्छत्। अत्र शिक्षणं छात्रकेन्द्रितमासीदिति च मन्त्रेणानेन विज्ञातम्।

आधुनिकशिक्षा अपि छात्रकेन्द्रितशिक्षारूपेण विद्यते। किन्तु बहुत्र शिक्षणं छात्रकेन्द्रितरूपेण न प्रचलति। छात्राणां कृते स्वरोचमानविषयं ज्ञातुमवकाशः आधुनिकशिक्षाक्षेत्रे विद्याभ्यासादारभ्य कल्पनीयः। प्रत्येकमपि छात्रः प्रत्येकस्मिन् क्षेत्रे सहजतया रुचिमेवं तस्मिन् क्षेत्रे विद्यमानेषु विषयेषु जिज्ञासुः भवति। यदि तस्य रोचमानस्य विषयस्याध्ययने पितरौ शिक्षकाश्च उपकुर्वन्ति तर्हि ते छात्राः जीवने उन्नतपथं प्राप्नुवन्ति। तदर्थं सर्वदा छात्रकेन्द्रितशिक्षणमत्यन्तमावश्यकं भवति।

**पाठ्यक्रमः–** मुण्डकोपनिषदः प्रथममुण्डके प्रथमखण्डे चतुर्थमन्त्रे पञ्चममन्त्रे च पाठ्यक्रमविषये सुष्ठु वर्णनमस्ति। यथा - “तस्मै स होवाच - द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च।”

“तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परा यया तदक्षरमधिगम्यते।"[145] इति।

अङ्गिरसः मतानुसारेण प्रथमं द्वे विद्ये विद्येते, परा अपरा च। अत्र अपराविद्यायां ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदः, शिक्षा, कल्पः, व्याकरणम्, निरुक्तम्, छन्दः, ज्योतिषम् इति दश आसन् इति ज्ञायते। उपनिषत्कालीनपाठ्यक्रमे एते एव विषयाः आसन् इत्यस्य स्पष्टनिरूपणम् अत्र प्राप्यते। परा विद्या तु यया विद्यया अक्षरं परब्रह्म प्राप्तुं शक्यते सा एव परा विद्या इति।

आधुनिकशिक्षाक्षेत्रे परा विद्या तु नास्त्येव किन्तु भारतीयसंस्कृतकलाशालासु अपराविद्यायां प्रोक्तविषयाः अद्यापि पाठ्यन्ते। किन्तु सामान्यविद्यालयेषु उत कलाशालासु च अपराविद्याऽपि परिवर्तिता। आधुनिककालस्य सम्बद्धविषया एव अपराविद्यायामिदानीं पाठ्यन्ते। उपनिषत्कालीनापराविद्या तु परां विद्यां प्राप्तुं सोपानानीव आसन्। किन्तु आधुनिकविद्याक्षेत्रस्य विषयां केवलं दैनन्दिनजीवनयापनार्थं धनसम्पादनार्थञ्चैव विद्यन्ते।

[145] मुण्डकोपनिषद् – 1/1/4-5

सम्प्रति अपराविद्यायाः प्रासङ्गिकता सम्पूर्णतया अस्तीति एवं सम्पूर्णतया नास्तीति वा वक्तुं न शक्यते। अतः संस्कृतविद्यालयेषु कलाशालासु च अस्याः प्रासङ्गिकता विद्यते एव।

**शिक्षायाः उद्देश्यम्**

मुण्डकोपनिषदः प्रथममुण्डके द्वितीयखण्डे एकादशमन्त्रे वर्णितं यत् –

**तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्या चरन्तः।**
**सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा।।**[146]

प्रायः सर्वासु उपनिषत्सु शिक्षायाः अन्तिमोद्देश्यत्वेन मोक्षप्राप्तिरेव प्रोक्ताऽस्ति। यः विद्वान्, शान्तः, श्रद्धया अरण्ये तपः आचरति, भैक्षचर्यं च करोति सः सूर्यद्वारेण विरजानदीं प्रयाति। तत्र अयमात्मा अमृतो भवति, मोक्षलोकं च प्राप्नोतीति।

आधुनिकशिक्षायाः उद्देश्यं तु ऐहिकसम्बद्धमेव विद्यते। यथा – ज्ञानप्राप्तिः, धनार्जनम्, समूहौन्नत्यम् इत्यादयः। मोक्षप्राप्त्यात्मकोद्देश्यानि तु वैदिकशिक्षायाम् एव विद्यते। वर्तमाने अस्य प्रासङ्गिकता प्रायः न विद्यते इति।

**शिक्षणविधयः**

मुण्डकोपनिषदः द्वितीयमुण्डके प्रथमखण्डे प्रथमे एव मन्त्रे एवमुच्यते यत् –

**तदेतत्सत्यं यथा सुदीप्तात्पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः।**
**तथाक्षराद्विविधाःसोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति।।**[147]

अत्र पावकस्य प्रत्यक्षोदाहरणं स्वीकृत्य जीवजन्तूनामुत्पत्तिविषयकं पाठं पाठयति गुरुः। यथा पावकात् सहस्रशः सदीप्ताः विस्फुलिङ्गा उद्भवन्ति, तद्वत् परब्रह्मणः जीवा उत्पद्यन्ते इति। अतिसुलभतया अतिकठिनं विषयं शिक्षकः समुचितोदाहरणेन प्रत्यक्षविधिना च अत्र पाठयति।

---

146 मुण्डकोपनिषद् – 1/2/11

147 मुण्डकोपनिषद् – 2/1/1

आधुनिकशिक्षायुगेऽपि प्रत्यक्षविधेः महत्त्वं शिक्षणे विद्यते। प्रत्यक्षविधिना छात्राणां साक्षाद्विषयज्ञानं भवति। तेन तेषामवगमनक्षमता अतीव वर्धते इति।

**गुरोः लक्षणम्**

मुण्डकोपनिषदः प्रथममुण्डके द्वितीयखण्डे अष्टममन्त्रो भवति –

**अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः।**
**जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः।।**[148]

अत्र शिक्षकः सुष्ठु शिक्षणं प्राप्य सर्वज्ञः ज्ञानी च स्यात्। यः अविद्यायां स्वं धीरः पण्डित इति स्वयमेव मत्वा कार्याणि करोति सः अन्धेन पुरुषेण नीयमानः अन्धपुरुष इव समुचितमार्गं न ज्ञात्वा पुनः पुनः अधः पतति। अत्र यद्यपि आन्तर्यार्थं जीवात्मनः अविद्यायाः फलं प्रोक्तं तथाऽपि एतद्वाक्यं शिक्षकाणां कृते समुचितं विद्यते। अत्र गुरुः विद्यां सम्पूर्णतया माप्नुयादिति ज्ञायते।

आधुनिकशिक्षाक्षेत्रे शिक्षकः स्वस्वीकृतविषये सम्पूर्ण ज्ञानं प्राप्नोति, किन्तु सर्वान् विषयान् न अधीते। उपनिषत्काले एकः एव गुरुः सर्वान् विषयान् पाठयति स्म। किन्तु अद्यतनकाले शिक्षकः केवलमेकमेव विषयं सम्यगधीत्य शिक्षकप्रशिक्षणादिकं चाधीत्य शिक्षको भवति। तथाऽपि शिक्षकः सामान्यतया सम्पूर्णज्ञानवान् स्यादिति धिया आधुनिकयुगे अस्य मन्त्रस्य प्रासङ्गिकता अस्तीत्युच्यते।

**शिष्यलक्षणम्**

मुण्डकोपनिषदः प्रथममुण्डके द्वितीयखण्डे त्रयोदशः मन्त्रो भवति यत् –

**तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय।**
**येनाक्षरं पुरुषं वेद सत्यम् प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ।।**[149]

अत्र गुरुः एतादृशशिष्येभ्यः एव ब्रह्मविद्यां शिक्षयेद्, ये शिष्याः गुरुमुपसन्नो भवन्ति, प्रशान्तमनस्काः भवन्ति शमदमादिसमन्विताः च भवन्ति इति। अत्र प्रशान्तचित्तो नाम

---

148 मुण्डकोपनिषद् – 1/2/8

149 मुण्डकोपनिषद् – 1/2/13

इन्द्रियनिग्रहः स्यादित्यर्थः। गुरुः तमेव शिष्यं ब्रह्मविद्यां शिक्षयेद् यः इन्द्रियनिग्रहयुक्तः समन्वितो च भवति।

अद्यतने युगे अपि समुचितप्रशान्तचित्तायैव विद्याग्रहणं सुलभं भवति। शिष्यः विद्यायामेव मनः स्थापयेत्, यदि अन्यमनस्को भवति तर्हि सः विद्याग्रहणे सामर्थ्यं न लभते एवं व्यर्थतया समयमप्यन्यत्र व्ययं करोति।

प्रथममुण्डके द्वितीयखण्डे द्वादशोऽयं मन्त्रोऽपि शिष्यलक्षणं प्रोच्यते। यथा -

"**तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्।**"[150] इति।

अत्र शिष्यः समित्पाणिः भूत्वा गुरुम् अभिगम्य शुश्रूषादिकं कृत्वा विद्यां प्राप्नुयात् इत्युच्यते।

आधुनिकशिक्षाक्षेत्रेषु विद्या धनेन लभते न शुश्रूषया इति। यदा ब्रिटीश्-जनाः भारतमागतवन्तः तदा तेषां प्रथमं लक्ष्यमासीत् शिक्षाक्षेत्रस्य परिवर्तनम्। अस्माकं समुचितोत्तमशिक्षायाः परिवर्तनेन जनानामाङ्ग्लभाषायाः उपरि प्रीतिमानयितुं प्रयतितवन्तः। तदा यः एकं विद्यालयं चालयति सः तस्मिन् विद्यालये सर्वकारोक्तरीत्या विधीननुश्रुत्य चालयेदिति नियम आगतः। यथा विद्यालये कक्षाप्रकोष्ठाः स्युः, विविधविषयाणां पाठनार्थं विविधशिक्षकाः स्युः, छात्राणां संख्यानुगुणं शिक्षकाः स्युरिति बहून् नियमान् आनीतवन्तः। तदारभ्य शिक्षा धनिकानां कृते सुलभा अभवत्। धनिकाः विद्यालयनिर्माणार्थमुपकृतवन्तः। तेन कारणेन धनिकानां विद्यार्थिनां चयनं मन्दं मन्दं प्रारब्धमासीत्। यतो हि गुरुकुलेषु गुरूणां समीपे विद्यालयनिर्माणार्थं धनादिकं नासीत्। एवं रीत्या "गुरुशुश्रूषया विद्या" इति नियमः नष्टोऽभवत्। किन्तु अद्यापि वैदिकपाठशालासु बहवः गुरुशुश्रूषया निर्धनेन विद्याभ्यासं कुर्वन्त्येवेति। अतः आधुनिकयुगे अस्य प्रासङ्गिकता अधिकप्रतिशतं नास्तीत्येव उच्यते। पुनः तृतीयमुण्डके प्रथमखण्डे पञ्चममन्त्रे शिष्यलक्षणमुच्यते यथा –

150 मुण्डकोपनिषद् – 1/2/12

**सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यज्ज्ञानेन ब्रह्मचर्येण नित्यम्।**
**अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः।।**[151]

अत्र यः शिष्यो आत्मज्ञानप्राप्तये यतते सः सत्यवान्, सम्यज्ज्ञानवान्, ब्रह्मचर्यगतनियमानाम् परिपालकः च स्यादिति। आत्मज्ञानात्मकविद्यां प्राप्तुं ब्रह्मचर्यपालनमावश्यकमेव। सामान्यतयाऽपि ब्रह्मचर्यपालनेन ज्ञानप्राप्तये इच्छा वर्धते। मनः समाहितो भवति इन्द्रियाणि निगृहीतानि भवन्ति। तेन ज्ञानप्राप्तिः सुलभा भवतीति।

आधुनिककाले छात्राः विद्यां प्राप्तुं गृहादेव विद्यालयमागच्छन्ति। प्राचीनकाले शिष्याः यावत् विद्याभ्यासकालो भवति तावत् गुरोरधीने एव भवन्ति स्म। तेन गुरोः समीपे उत्तमाभ्यासैः तत्रस्थोन्नतवातावरणे बहून् उत्तमविषयान् ते ज्ञातुं समर्था अभूवन्। इदानीन्तनकाले इन्द्रियनिग्रहणम् असम्भवमिति वक्तुं शक्यते। छात्राः गृहे दूरदर्शने दूरवाण्याञ्च किं पश्यन्तीति च पितरौ न जानन्ति। उभावपि पितरौ उद्योगे रताः भवन्तीति कारणेन बालकानां विद्याग्रहणे उत्साहं दातुं कोऽपि न भवति।

अन्तर्जालं च आधुनिकयुगे बालकानां विद्याग्रहणे अवरोधं भवति। एवं रीत्या आधुनिकच्छात्राणामपि इन्द्रियनिग्रहादिविषयाः आवश्यका इत्युच्यन्ते।

**अनुशासनम्**

मुण्डकोपनिषदः तृतीयमुण्डके प्रथमखण्डे षष्ठमन्त्रे शिक्षायाः उद्देश्यम् अनुशासनज्ञानयोः विषये वर्णना प्राप्यते यत् –

**सत्यमेव जयते नानृतं सत्येन पन्था विततो देवयानः।**
**येनाक्रमन्त्यृषयो ह्याप्तकामाः यत्र तत्सत्यस्य परमं निधानम्।।**[152] इति।

अत्र गुरुः स्वशिष्याय ब्रह्मप्राप्तिविषये मार्गं प्रदर्शयति। येन पथा गमनेन ब्रह्मप्राप्तिर्भवति इति विवरणावसरे शिक्षोद्देश्येषु प्रमुखमुद्देश्यमेकं वदति यत् "सत्यमेव जयते नानृतम्" इति।

---

151 मुण्डकोपनिषद् – 3/1/5

152 मुण्डकोपनिषद् – 3/1/6

येन सत्येन पथा ब्रह्मप्राप्तिः शिष्याय भवति, तदेव सत्यं प्राप्यमानया उत प्राप्तविद्यायाः उद्देश्येषु प्रमुखमिति। सत्यपालनमत्र शिक्षायाः उद्देश्यत्वेन अनुशासनत्वेन चाऽपि दृश्यते।

आधुनिकशिक्षायामपि बहूनि मूल्यानि सन्ति। तेषु सत्यपालनमपि विद्यते। आधुनिकयुगे सत्यपालनस्य प्रामुख्यता तावन्नास्ति यावत् उपनिषत्काले आसीत्। समाजे सत्यपालनेन आदौ केचन उपद्रवाः भवन्ति किन्तु गच्छता कालेन सत्यपालनेन उन्नतस्थानप्राप्तिर्भवति। समुचितसौख्यजीवनं च भवतीति।

मुण्डकोपनिषदः तृतीयमुण्डके प्रथमखण्डे नवममन्त्रः अनुशासनं द्योतयति यथा -

**"यस्मिन् विशुद्धे विभवत्येष आत्मा"**[153] इति।

विशुद्धे मनसि आत्मा विभाति इति शिष्यमात्मज्ञानप्राप्तये गुरुर्वदति। अत्रापि शिष्याय विशुद्धमनः आवश्यकः इति शिक्षोद्देश्यमेवमनुशासनमपि गुरुः वदति।

एवमेव तृतीयमुण्डके द्वितीयखण्डे चतुर्थमन्त्रः अनुशासनविषये वदति यथा –

**"नायमात्मा बलहीनेन लभ्यः न च प्रमादात्"**[154] इति।

अत्र गुरुः आत्मज्ञानप्राप्तये मनोधैर्यस्य प्रामुख्यं प्रदर्शयति एवं शिष्यो अश्रद्धावान् भवति चेत् तस्य आत्मज्ञानं न भवतीति।

परस्मिन्नेव मन्त्रे पुनः अनुशासनविषये उच्यते यथा -

**"युक्तात्मानः सर्वमेवाविशन्ति"**[155] इति।

अत्र शिष्यो यदि ज्ञानप्राप्तिकाले कक्ष्यायां युक्तात्मा भवति तर्हि सः सर्वमाविशतीति। अत्र शिष्येभ्यः युक्तात्मत्वमनुशासनत्वेन प्रदर्शितम्।

विशुद्धमनः, मनोधैर्यम्, श्रद्धा, युक्तात्मत्वम् इत्यादिकम् अनुशासनसम्बद्धविषयाः उपनिषत्काले शिष्यैः अनुसरणीयाः आसन्। अद्यतनच्छात्राणामपि एतेषामनुशासननियमानां

153 मुण्डकोपनिषद् – 3/1/9

154 मुण्डकोपनिषद् – 3/2/4

155 मुण्डकोपनिषद् – 3/2/5

पालनमावश्यकम्। आधुनिके जगति छात्राणां प्रगतौ निरोधकानि बहूनि सन्ति। तेषाम् दूरीकृत्य प्रगतिपथे गमनाय एते अनुशासननियमाः पालनीया इति।

**निष्कर्षः**

छात्राणां समाजस्य च सुष्ठु जीवनयापनाय सफलतायै च प्राधान्येन श्रुत्यधिष्ठितशिक्षा आनुकुलिकपरिवर्तनेन आश्रयणीया। यस्य राष्ट्रस्य शिक्षाव्यवस्था यथा समुन्नता तद्राष्ट्रं तदनुगुणं प्रगतिपथमवतरतीति वक्तुं शक्यते। प्राचीनकाले भारतीयविद्वांसः शिक्षाविकासाय सर्वदा सर्वथा च प्रयतितवन्तः। अतः आचार्यः मनुः उद्घोषयामास यत् -

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः।।**[156]

## सन्दर्भग्रन्थसूची


1. उपनिषद् : गीताप्रेस, गोरखपुर, दशमसंस्करण, सन् 2014.
2. मुण्डकोपनिषद् : स्वामी प्रखर प्रज्ञानन्द सरस्वती, चौखम्बा संस्कृत संस्थान, वाराणसी-221001. सन् 2019.
3. सुभाषितरत्नभाण्डागारम् : नारायणराम आचार्य, निर्णयसागर प्रेस, मुम्बई-02.
4. मनुस्मृतिः : मोतिलाल बनारसी दास, दिल्ली, 1987 ई.।
5. मुण्डकोपनिषद् : श्रीजगन्नाथशास्त्री तैलङ्गः, भारतीय विद्या प्रकाशन, प्रथमसंस्करण, 2000
6. शिक्षण कला : डॉ. शालिग्राम त्रिपाठी, राधा पब्लिकेशन्स, नई दिल्ली – 110002.


[156] मनुस्मृतिः – 2/20

# यास्ककृतनिरुक्ते निघण्टुकाण्डस्य समालोचनम्

**केशवकुमार पाण्डेयः**
शोधच्छात्रः, केन्द्रीयसंस्कृतविश्वविद्यालयः,
गङ्गानाथझा परिसरः, प्रयागराजः

**निर्वचनं निरुक्तम्** इति विषयमधिकृत्य प्रवर्ततेदं शास्त्रम्। अस्यस्थानं षड्वेदाङ्गेषु वरिवर्ति उक्तं यथा - **निरुक्तं श्रोत्रमुच्यते**[157]। चतुर्दशनिरुक्तकाराः बभूवूः तेष्वन्यतमः आचार्ययास्कः। निरुक्ते चतुर्दश अध्यायाःसन्ति तेषु अन्तिमौ द्वौ अध्यायौ परिशिष्टौ स्तः। प्रथम अध्यायत्रयेषु निघण्टुकाण्डं लभ्यते। ग्रन्थस्य आरम्भे **समाम्नायःसमाम्नातः स व्याख्यातव्यः**[158]**।** इति प्रतिज्ञावचनमारम्भे करोति आचार्य यास्कःगवादिर्देवपत्न्यन्तःशब्दसमुदायःमन्त्रार्थपरिज्ञानाय ऋषिभिर्ग्रन्थीकृतःतान् विभज्य इमान्यत्र नामानि इमान्याख्यातानि उपसर्गा इमे निपाता इमे इत्येवं रीत्या निर्वक्तव्य इति।अन्येऽपि आचार्याःशेषःनिरुढाहि इयं संज्ञा छन्दःसमुदाये इति भावः।निघण्टु शब्दस्य निर्वचनं यथा **निगमा इमे भवन्ति।**[159] निश्चयेन निगूढार्थाःपरिज्ञाताःसन्तो मन्त्रार्थान् गमयन्ति ज्ञापयन्ति। **छन्दोभ्येःसमाहृत्य समाहृत्य समाम्नाताः**[160] एते गवादयः शब्दाःछन्दोभ्यःमन्त्रेभ्यःसमाहृत्य समाहृत्य समाम्नाताःग्रन्थीकृताः। ते समाम्नाताःगवादयो मन्त्रार्थ निगमनात् हेतोःनिघण्टवःउच्यन्ते। गकारस्थाने घकारं कृत्वा तकारस्थाने च टकारं कृत्वा उक्तञ्च—

---

157 पाणिनीयशिक्षा

158 निरूक्तम् 1 1

159 निरुक्तम् 1 1

160 निरूक्तम् 1 1

**वर्णागमो वर्ण-विपर्ययश्च द्वौ चापरौ वर्ण-विकारनाशौ ।**
**धातोस्तदर्थातिशयेन योगास्तदुच्यते पञ्चविधं निरुक्तम्।।**[161]

अपि वाऽहननादेव स्युःसमाहता भवन्ति, समाहृता भवन्ति। अपि चामन्यः प्रकारो निघण्टुशब्दनिर्वचने। कस्तर्हि आहननात्। नतु निगमनादित्यभिप्रायः। पाठार्थे वर्तमानस्य हन्तेःअनेकार्थत्वधातूनां वार्णत्यापत्या हकारस्थाने घकारः तस्य टकारः।

**ब्राह्मणो -इदमाहतम्** [162] इति सूत्रे अत्र पाठार्थे हन्तेःप्रयोगः। यद्वा एते समाहरणक्रियायोगात् समाहृताभवन्ति छन्दोभ्यः ततः समाहर्तवःसन्तो निघण्टवःइत्युच्यन्ते। एवमेष निघण्टुशब्दो गमेर्वैकोपसर्गात् हन्ति हरतिभ्याम् इति निघण्टुपदनिर्वचनम्।

**पदचतुष्टय व्याख्यानम्-**

**चत्वारि पदजातानि नामाख्यातेचोपसर्गनिपाताश्च तानिमानि भवन्ति** [163]।

लोके वेदे च प्रसिद्धानि चतुश्सङ्ख्यकानि पदजातानि पदगणाः। एतानि चत्वारि निघण्टु संज्ञकानीति बोधः। उक्तं यथा सत्वप्रधानानि नामानि भावप्रधानमाख्यातम्। तत्र लोकवेदप्रसिद्धे पदचतुष्टये ये तावन्नामाख्याते तयोः तावदेव लक्षणं विवृणुते आचार्यः।

**ऋषयोऽप्युपदेशस्य नान्तं यान्ति पृथक्त्वशः।**
**लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ।।**[164]

भावः पाकरागत्याख्यः स यत्र प्रधानं गुणभूता क्रिया तदिदं भावप्रधानमाख्यातम्। आख्यातजत्वान्नाम्नां पश्चान्नामलक्षणमुच्यते। लिङ्गसंख्योरत्र सद्भाव इति सत्वम्। तद्येषु प्रधानं

---

161 निरुक्तम् 1 1

162 गोपथब्राह्मणम्

163 निरुक्तम् 1-1

164

गुणभूता क्रिया, नामान्येव तानि। अथ पुनर्यत्रैते उभे भवतो वाक्ये प्रधानमिति फलितम्। पूर्वापरीभूतं पूर्वापरमिव पौर्वापर्येणावस्थितमेकमनेकासु क्रियासु आश्रितम् उपक्रमप्रभृतीति उपक्रम आरम्भस्तस्मादारभ्यापवर्गपर्यन्तं यावदन्त्या क्रियेत्यर्थः। उक्तं च

**क्रियासु बह्वीष्वभिसंश्रितो युःपूर्वापरीभूत इवैक एव।**
**क्रियाभिनिर्वृत्तिवशेन सिद्ध आख्यातशब्देन तमर्थनाहुः।।**

मूर्तं सत्त्वभूतं -सत्वरुपिणं, लिङ्गसंख्यायुक्तैः सत्त्वानामभिराचष्टे। कथं व्रज्या पक्तिरिति ।व्रज्या-व्रजनम्। पक्तिः-पचनम्।

**सत्त्वोपदेशनिरूपणम्-** सत्त्वानां- प्राणिनां उपदेशः-सामान्योपदेश इत्यर्थः। गौरश्वः पुरुषो हस्तीति-अयं गवादिः सत्त्वानां विशेषोपदेश इत्यर्थः।

**भावोपदेशनिरूपणम्-** क्रियामात्रस्य सामान्येनोपदेश इत्यर्थः। आस्ते.शेते.व्रजति.तिष्ठतीति। तत्तत्क्रियाणां विशेषोपदेश इत्यर्थः।

**इन्द्रियनित्यं वचनमौदुम्बरायणः**[165]- इन्द्र आत्मा स येन ईयते-लिङ्ग्यते-अनुमीयते च तदिन्द्रियम्। तस्मिन्निन्द्रिये यावत्तिष्ठति तावत् नित्यं वचनमिति, औदुम्बरायण आचार्यो मन्यत इति शेष। **पुरुषविद्याऽनित्यत्वात् कर्मसम्पत्तिर्मन्त्रो वेदे।**

पुरुषेषु मनुष्येषु विद्यायाः विज्ञानस्यानित्यत्वात् विस्मरणेन कर्मसम्पत्तिः न स्यात्, अविगुणकर्मफलसम्पत्तिः भवेत् इत्येतमर्थं वेदे मन्त्रः समाम्नात इति वाक्यशेषः

**भावविकारनिरुपणम्-**

अत्र वार्ष्यायणि मतं स्थापयति आचार्ययास्कः-

---

165 निरुक्तम् 1-1

**यथा षड् भावविकाराः भवन्तीति वार्ष्यायणिः।**[166] **जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, विनश्यतीति।** आचार्यो मन्यते इति वाक्यशेषः।

**जायते**- इति पूर्वभावस्यादिमाचष्टे, नापरभावमाचष्टे, न प्रतिषेधति। जनिः पूर्वोभावः, ब्रूतं ते नेति प्रतिषेधे, न परोभावः, अपरभावः तं न ब्रूते। न प्रतिषेधति। अस्तित्वस्य न प्रतिषेधं करोतीत्यर्थः।

**अस्ति**- इत्युत्पन्नस्य सत्वस्यावधारणम्। अस्तीति जातस्य सत्त्वस्यावधारणमात्रं ब्रवीति, न विपरिणाममाचष्टे-अपूर्णत्वात्। न प्रतिषेधत्युपस्थितत्वात्।

**विपरिणमते**- इत्यप्रच्यवमानस्य तत्त्वाद्विकारम्। विपरिणमत इत्येष शब्दो अप्रच्यवमानस्य तत्त्वादप्रभ्रश्यमानस्य विकारं विक्रीयमाणं ब्रवीति। न वृद्धेरर्थमाचष्टे। न प्रतिषेधति।

**वर्धते**- इति स्वाङ्गाभ्युच्चयं सांयौगिकानां वार्थानाम्-वर्धते विजयेनेति वा.वर्धते शरीरेणेति वा। वर्धते इत्येष शब्दःस्वेषामङ्गानां शिरोग्रीवाबाहूदरादीनां सांयौगिकानां वा हिरण्यधान्यादीनां, अभ्युच्चयमाह। वर्धते विजयेनेति सांयौगिकेषु उदाहरणम्।

**अपक्षीयते**- इत्येतेनैव व्याख्यातः प्रतिलोमम्।यथैव हि स्वाङ्गैः सांयौगिकैर्वा द्रव्यैरुपचीयते. तथैवापक्षीयते।

**विनश्यति**- इत्यपरभावस्यादिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति। विनाश एवापरभावस्तस्यादिमाचष्टे।

**उपसर्गनिरुपणम्-**

उपसर्ग निरुपणावसरेआचार्योऽयं द्वयस्याचार्यस्य मतं समुपस्थापयन् लिलेख। **न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनः**[167] उपसर्गा प्रपरादयः निर्बद्धा निष्कृष्य-

166 निरुक्तम् 1.1.

167 निरुक्तम् 1,2

नामाख्यातमध्यात् बद्धाः पदवाक्यरुपेण विरचिताः सन्तोः नार्थान्निराहुरिति शाकटायन आचार्यो मन्यते। **नामाख्यातयोस्तु कर्मोपसंयोगद्योतकाः भवन्ति।** नामाख्यातयोरर्थ उपसर्गसंयोगे सति व्यज्यते। नामाख्यातवियोगे तेषामर्थाभिधानशक्तिर्नास्तीति भावः। अयमुपसर्गाणां द्योतकत्वपक्षः। उच्चावचान् अनेकविधान् **उच्चावचाः पदार्थाः भवन्तीति गार्ग्यः**। उच्चावचाः- बहुप्रकारकाः पदानामर्थाः पदार्थाः भवन्तीति वियुक्तानामपि नामाख्याताभ्यामिति गार्ग्य आचार्यो अमन्यत। **आ**-इत्यर्वागर्थे। **प्र-परा**-इति एतस्य प्रातिलोम्यम्। प्रपरा इत्येतावुपसर्गावितस्यैवाङोऽथस्य प्रातिलोम्यमाहतुः। प्रगतः परागतः। **अभि**-इत्याभिमुख्यम्। अभिगतः। **प्रति**-इत्येतस्य प्रातिलोम्यम्। एतस्य-अभेः प्रातिलोम्यमम् प्रतिगत इति। **अति, सु**-इत्यभिपूजितार्थे। अति,सु इति एतौ अभिपूजितार्थे वर्तेते अतिधनः सुब्राह्मणः। **निर्,दुर्**-इत्येतयोः प्रातिलोम्यम्। निर्धनः दुर्ब्राह्मणः। **नि, अव**-इति विनिग्रहार्थीयौ। निगृह्णाति इवगृह्णाति नियन्त्रयतीति। **उत् ,इत्**-एतयोः प्रातिलोम्यम्। उदित एतयोः द्वयोः प्रातिलोम्यम्। उद्गृह्णाति उत्थापयति । **सम्**-इत्येकीभावम्। सङ्गृह्णाति सङ्ग्रहणं करोतीति। **अनु**- इति सादृश्यापरभावम्। अनुरूपमस्येदमिति सादृश्यम्। अनुगच्छति। **अपि**-इति संसर्गम्। सर्पिषोऽपि स्यात्। मधुनोऽपि स्यात्। संबन्धसामान्ये षष्ठी बिन्दुरिति। **उप**-इत्युपजनम्। उपजायते। उपजनमाधिक्यम् । अधिकं भवतीत्यर्थः। **परि**-इति सर्वतोभावम्। परिधावतीति। सर्वतोधावतीत्यर्थः। **अधि**-इत्युपरिभावमैश्वर्यं वा । अधितिष्ठति लोकम् । अधिपति इति अध्यक्षः । एवमुच्चावचानर्थान् प्राहुस्त उपेक्षितव्याः ते उपसर्गाः , उपेक्षितव्याः ज्ञातव्ययाः।

अत्र ध्यातव्य विषयोऽयं यस्काचार्य:उपसर्गाणाम् विंशति विभागा उक्ताः अत्र निस्, दुस् इत्युपसर्गद्वय नाङ्गीकुर्वन्ति आचार्या:उपसर्गाणां द्योतकत्त्व विषये उक्तं वर्तते यत्

**उपसर्गेण धात्वर्थो बलादन्यत्र नीयते।**
**प्रहाराहारसंहारविहारपरिहारवत्।।** [168]

---

[168] महाभाष्यम्

**अथ निपाताः**

**उच्चावचेष्वर्थेषु निपतन्ति।** [169] विभिन्नेषु अर्थेषु निपतन्ति निपाताः।

1 अप्युपमार्थे

2 अपि कर्मोषसंग्रहार्थे

3 अपि पदपूरणाः

**उपमार्थका**ः- चत्वार उपमार्थे भवन्ति यथा इव, न, चित्, नु।

इव इति भाषायां च च अन्वाध्यायं च। इव नामको निपातः भाषायां (लोके) अन्वाध्यायं (वेदे) च प्रयोगे भवति यथा- **अग्निरिव। इन्द्र इव।** [170]

नेति प्रतिषेधार्थीयःभाषायाम्। उभयमन्वाध्यायम्। अत्र न इति निपातस्य भाषायां (लोके) प्रतिषेधार्थे भवति परम् अन्वाध्याये तु उभयं भवति **नेन्द्रं देवममंसत**[171], इति प्रतिषेधार्थीयः । **दुमदासो न सुरायाम्** [172] इत्युपमार्थीयः। अत्र न इति निपातस्य पूर्व प्रयोगेण प्रतिषेध अर्थःगृह्यते तथा मध्य प्रयोगेण उपमार्थीयःभवति।

चित् इत्येषोऽनेककर्मा अत्र चित् नामको निपातस्य अनेक कर्मणि प्रयोगः क्रियते । पूजायां यथा **आचार्यः चित् इदं ब्रूयात् आचार्य आचारं ग्राहयति। आचिनोति अर्थान्। आचिनोति बुद्धिमिति वा।**

उपमार्थे यथा- दधिचित् अवकुत्सित अर्थे यथा कुल्माषांश्चिदाहर। कुल्माषाःकुलेषु सीदन्ति।

[169] निरुक्तम् 1.2

[170] ऋग्वेदः 10.87,173

[171] ऋग्वेदः 10.74

[172] ऋग्वेद 7.2.12

**नु इत्येष अनेककर्मा**। नु निपातस्य अनेकविध अर्थे प्रयोगः भवति। हेत्वपदेशे यथा इदं नु करिष्यति। अनुपृष्टे यथा कथं नु करिष्यति। उपमार्थे यथा वृक्षस्य नु ते पुरुहूत । वया: वृक्षस्य इव ते पुरुहूत। शाखाः। वया: शाखाः वेते:। वातायना: भवन्ति। शाखा खशया:। शक्नोतेर्वा।

**कर्मोषसंग्रहार्थ:**

**यस्य आगमात् अर्थपृथक्त्वम् अह विज्ञायते, न तु औद्देशिकमिव, विग्रहेण पृथक्त्वात्, स कर्मोषसंग्रह:**[173]। यस्य निपातस्य आगमनेन वस्तुनां गणना स्पष्टं न भवति परं पदानां पार्थक्यं ज्ञानं भवति स: कर्मोषसंग्रह निपात:। च, इति समुच्चयार्थ:। अहं च त्वं च वृत्रहन् । अयमेवार्थे देवेभ्यश्च पितृव्यश्च

आ इति आकार:। वा इति विचारणार्थे। यथा हन्ताहं पृथिवीमिमां निदधानीह वेह वा इति। वा इति समुच्चयार्थ:। वायुर्वा त्वा मनुर्वा त्वा इति ।

**पदपूरणार्थकाः** कम्, ईम, इत्, उ।

**निष्टवक्रासश्चिदिन्नरो भूरितोका वृकादिव।**
**बिभ्यस्यन्तो ववाशिरे शिशिरं जीवनाय कम्।।**[174]

**सन्दर्भग्रन्थाः-**

1.पाणिनीयशिक्षा
2. निरुक्तम्
3. गोपथब्राह्मणम्
4. महाभाष्यम्
5. ऋग्वेदः

173 निरुक्त 1.2

174 ऋग्वेद 9.61.14

# योगदर्शने अष्टाङ्गयोगस्य प्राकर्ष्यम्

**श्रीमती सस्मिता सेठी**
अध्यापिका, कुन्तला कुमारी सावत
महिला महाविद्यालयः, वालेश्वरम् ।

**उपोद्घातः-** भारतीयदर्शनपरम्परायां पातञ्जलयोगदर्शनं दर्शनशास्त्रेषु मूर्धन्यमावहति। तत्र "युज् समाधौ"[175] इत्यस्मात् धातोः घञ्-प्रत्यये योगः शब्दः निष्पन्नः। "अथ योगानुशासनम्" इति सूत्रं पातञ्जलयोगसूत्रे आदौ विद्यते तत्र सूत्रप्रयुक्तयोगशब्दः सम्प्रज्ञाता-सम्प्रज्ञातसमाधिरूपमर्थं व्याचष्टे। तत्र कठोपनिषद् ब्रबीति- "अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति"[176] इति। तथा हि महर्षिः मनुः ब्रुते- "सर्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम्"[177]। अपि च याज्ञवल्क्यस्मृतौ- "अयं तु परमो धर्मो यद् योगेनात्मदर्शनम्"[178]। तत्र योगसूत्रस्थचतुर्षु पादेषु साधनपादे अष्टाङ्गयोगविषयकं सूत्रमुपनिबद्धम्।[179] अष्टाङ्गयोगस्तु पतञ्जलिदृष्ट्या सार्वभौमः महाव्रत इति।[180] योगसाधनार्थं अष्टाङ्गयोगमार्गः प्रशस्तेति निश्चप्रचम्। मया शोधनिबन्धेऽस्मिन् वक्ष्यमाणरीत्या विषयविन्दवः समुपन्यस्ताः विद्यन्ते।

•उपोद्घातः।

•**कूटशब्दाः**- योगः, अष्टाङ्गस्वरूपम्, संयमः, कैवल्यम्, समाधिः।

---

175 योगः समाधि इति । व्यास.भा. १/१

176 कठ.उप.- १/२/१२

177 म.स्मृ.- ११/८५

178 या. स्मृ.- १/८

179 यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि- यो.सू- २/२९

180 जातिदेशकालसमयावच्छिन्नाः सार्वभौमा महाव्रतम्- यो.सू- २/३१

•प्रस्तावना।

•अष्टाङ्गयोगस्वरूपम्।

•अष्टाङ्गयोगफलश्रुतिः।

•उपसंहारः।

•पादटिप्पणी।

•सहायकग्रन्थाः।

श्री अरविन्दः वदति- For the contact of the human individual consciousness with the divine is the very essence of yoga. Yoga is the union of that which has become separated in the play of the universe with its own true self, origin and universality.[181]

अस्यायमभिप्रायः योगस्तु एकत्वं विभर्ति। तदेव एकत्वं जीवात्मा- मौलिकत्वं-विश्वप्रपञ्चत्वमिति त्रिभिः सार्धं जायते । यत्तु पार्थिवक्रियायां विछिन्नः सञ्जातम्। मानवस्तथा तस्य वैयक्तिकचैतन्यं दिव्यतासहितं योगस्य योगसूत्रस्य समाधिपादे चित्तवृत्तिनिरोधनिमित्तं एकतत्वाभ्यासः, वैराग्यम्, प्रणवजपः, प्राणायामप्रभृतिसाधनानि वर्णितानि सन्ति। प्रथमपादे समाहितचित्तानां मनुष्याणां कृते योगस्य प्रकृतस्वरूपं लक्ष्यं पर्यालोचितम्। परन्तु द्वितीयपादे नाम समाधिपादे चित्तचाञ्चल्यवतां मनुष्यनिमित्तं साधनानि व्यवस्थितानि सन्ति। यमादारभ्य समाधिपर्यन्तं सत्सु अष्टसु अङ्गेषु समाधिस्तत्र सर्वातिशायी। अत्र एतेषु यमनियमयौ साधनीयौ भवतः । यम-नियम-आसनाभ्यासात् प्राणायामः स्वतः सिध्यति। अनन्तरं प्रत्याहारसाधनया

[181] The synthesis of yoga- Sri Aurobinda, page- 32

मनोऽन्तर्मुखी भवति। तत्र धारणा-ध्यान-समाधिरिति त्रयमन्तरङ्गं निगद्यते[182]। योगमार्गे व्युत्थाननिमित्तम् अष्टाङ्गयोगस्तु महदुपकारकं प्रतिभाति।

**प्रस्तावना-**

आत्मस्वरूपप्रतिष्ठानिमित्तं चित्तवृत्तिनिरोधस्य अपरिहार्यत्वात् महर्षि पतञ्जलिः योगसूत्रं प्रणीनाय। तत्र समाधिपाद-साधनपाद-विभूतिपाद-कैवल्यपादेति चत्वारः पादाः सर्वान् विषयान् आहत्य प्रतिपादिताः सन्ति। आदौ समाधिपादे चित्तवृत्तिनिरोधरूपं योगमुपन्यस्तः। तस्य स्वरूपं वैरुप्यं साधने जायमाना पञ्चक्लेशाः, पञ्चवृत्तयः, यथार्थतया प्रतिपादिता सन्ति। समाधिपादोपरान्तं साधनपादस्य विवरणं परिलक्ष्यते  तत्र अभ्यास- वैराग्यरूपकयोगोपाय प्रथमपादे पर्यालोच्य अनन्तरं चित्तस्य व्युत्थाननिमित्तं क्रियायोग विवक्षया पतञ्जलिना उक्तम्-

“तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः”[183]। क्रियायोगमाध्यमेन समाधिभावः जागर्त्ति तथा अविद्या- अस्मिता-राग-द्वेष-अभिनिवेशरूप पञ्चक्लेशाः क्षीणाः भवन्ति।

**अष्टाङ्गयोगस्वरूपम्-**

समाधिपादे समाहितचित्तानामुत्तमाधिकारिणां साधनपादस्यादौ च क्रियायोगप्रकरणे मध्यमाधिकारीणां योगसाधनमार्गं प्रतिपाद्यत्यन्तविक्षिप्तचित्तयुक्तानां मन्दाधिकारिणां योगसाधनार्थमष्टाङ्गयोगस्य निर्देशः महर्षिपतञ्जल्यभिप्रेतः। ननु चित्तचाञ्चल्ययुक्तानां मन्दाधिकारिणां कृते अभ्यासवैराग्यक्रियायोगाद्युपायाः किं सर्वथा अनावश्यकाः इति चेत् तत्रोच्यते उपर्युक्तमार्गद्वयमष्टाङ्गयोगस्योपमार्गत्वात्तत्र एतयोः गतार्थत्वं स्वरूपतः नान्तरीयकविधिप्रतिपादितम् । योगाङ्गानां पुनः पुनः अनुष्ठानम् । वैराग्य तस्य मूलम्, यस्य तु

182 त्रयमन्तरङ्गं पूर्वेभ्यः । यो.सू.- ३/७

183 यो.सू- २.१

नियमाङ्गे सन्तोषे अन्तर्भावः। श्रद्धाविर्यादिव्यतिरेकेण योगाङ्गभूतधारणायामन्तर्भावात् मन्दाधिकारिणां विक्षिप्तचित्तयुक्तानां योगसाधनार्थमष्टाङ्गमार्गः प्रशस्तः।

**यमः-** सूत्रकारनिर्दिष्टाष्टयोगाङ्गेषु प्रथमाङ्गं यमः। यम् उपरमे इति धातोः घञ् प्रत्यये कृते निष्पन्नोऽयं यमः शब्दः निवृत्तिपरकमर्थं द्योतयति। हिंसादिभ्यो निषिद्धकर्मभ्योः योगिनं यमयन्ति निवर्तयन्तीति यमाः इति।

महर्षिपतञ्जल्यनुसारं अहिंसा-सत्य-अस्तेय-ब्रह्मचर्य-अपरिग्रहभेदात् पञ्च यमाः। यम् उपरमे सति धातुतः निष्पन्नः यमशब्दः यस्यार्थः उपरमः अभोगो वा। वस्तुतः हिंसा-मिथ्या-मैथुन-परिग्रहाणां क्रमशः अभावरूपाः अहिंसा-सत्य-अस्तेय-ब्रह्मचर्यअपरिग्रहरूपोपरमाः यमशब्दस्यार्थाः महर्षिपतञ्जल्यभिप्रेताः। अहिंसादिपञ्चयमानां साधनं विना न केवलं नियमाद्युत्तरयोगाङ्गानां साधनमसम्भवमपि तु समाधिसिद्ध्यर्थमसमर्थश्च भवति साधकः। एते यमाः जातिदेशकालसमयादिष्वनवच्छिन्ना महाव्रतेन भवन्ति परिगणिताः।

**अहिंसा-** महर्षिपतञ्जलिप्रोक्तपञ्चयमेषु अहिंसायाः स्थानं प्रथमम्। न हिंसा अहिंसा। मनसा वाचा कर्मणा च ज्ञातेनाज्ञातेनापि कस्यचित्प्राणिनः कष्टानुत्पादनम्, प्राणात्यादिसंकटकालेऽपि स्थावरजङ्गमादिसर्वप्राणिनामनभिद्रोह नाम पीडनबुद्धिराहित्यम्[184]। प्रमत्तयोगात् प्राणव्यपरोपणं हिंसा, तस्मान्निवृत्तिरेवाऽहिंसापदेन व्यपदेश्यते। सर्वथा सर्वदा सर्वप्राणिनामनभिद्रोहः अहिंसा इत्यहिंसायाः लक्षणं भाष्यकारसम्मतम् ।[185]

**सत्यम्-** सत्यं यमस्य द्वितीयमङ्गम्। सत्स्वरूपब्रह्मणि श्रद्धा अथवा आत्मनः सत्तायां प्रत्यय नाम विश्वासः। त्रिकालबाधाराहित्यं तत्। न केवलं वचसा अपितु मनसा च यथोचित सम्पादनीय कार्यं सत्यम्। सत्यस्य लक्षणं पुराणादिष्वपि सम्यग्वर्णितम्। अग्निपुराणे नारदपुराणे च सत्यस्य

---

[184] आ.पृ- २४८

[185] व्या.भा- २.३०

लक्षणं सम्यगालोचितम्। यतः तद्वचनं द्रोणाचार्यस्य अहितकरं सञ्जातम्। अतः लेशमात्रमपि अनृतं यथा न स्यादिति लक्षणं महर्षिपतञ्जल्यभिप्रेतम्।

**अस्तेयम्-** यमस्य तृतीयाङ्गमस्तेयम्। यतः अहिंसायाः सत्यस्य च सिद्ध्यनन्तरमस्यानुष्ठानम्। स्तेयं नाम परद्रव्यहरणं चौर्यवृत्तिर्वा। तन्निवृत्तिश्चास्तेयम्, स्तेयभावस्य द्योतकम्। शास्त्रे यमनियमानुलंघनपूर्वकं परद्रव्यस्यानापहरणमस्तेयमपि[186] व्यासदेवः। विधिपूर्वकशास्त्रनिर्दिष्टग्रहणविपरीतं स्वबुद्ध्या द्रव्याणामानयनं स्तेयम्। तद्विपरीतमस्तेयम्। कस्याप्यन्यस्य तृमरत्नानां स्वर्णमौक्तिकादिपदार्थानां ग्रहणार्थं मनस्यप्यचिन्तनमेवास्तेयम्।

**ब्रह्मचर्यम्-** ब्रह्मचर्यं यमाङ्गस्य चतुर्थमङ्गम्। यस्यार्थः गुप्तेन्द्रियस्योपस्थस्य संयमः। परन्तु न केवल उपस्थेन्द्रियसंयमेन ब्रह्मचर्यसिद्धिः अपि तु समस्तेन्द्रियाणां संयमेनैव तत्सिद्धिः सम्भवति। तत्र ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः[187] अत्र वीर्यशब्देन शक्ति-सामर्थ्य-तेजप्रभृतीना ग्रहणं भवति।

**अपरिग्रहः-** अपरिग्रहः यमस्य पञ्चममङ्गम्। विषयादीनां ग्रहणं परिग्रहः। विषयाणां ग्रहणे अर्जन-रक्षण-क्षय-हिंसादिजन्यदोषाः सम्भवेयुः। अतः तद्विरीत वैराग्यादिभावात् विषयादीनामग्रहणपरिग्रहः। भौतिकसाधनं प्रति भोग्यपदार्थं प्रति वा अनासक्तिभावः अपरिग्रह इति प्रोच्यते।

**नियमः-** नियमो द्वितीययोगाङ्गम्। नियमयन्ति प्रेरयन्तीति नियमाः इति व्युत्पत्त्या प्रवृत्तिमूलकोऽयमिति प्रतीयते। अतः तत्र निवृत्तिपरकयमोक्त सार्वभौमताभावः। विविधरूपशौचाद्यङ्गानि नियमाः, यस्यार्थः सदाचारपालनम्। अनेन व्यक्तिविशेषस्य साधकस्य

---

[186] व्या.भा- २.३०

[187] यो.सू- २.३८

वा चरित्रगतविधानं सम्भवति, येन स्वस्यानुशासनविधानाय व्यक्तिगतकायेनान्तःकरणेन्द्रियेण च प्रवृत्तिर्जायते। अतोऽन्तः स्थितानां प्रवृत्तीनां नियमनमनेन सम्भवति।

**शौचम्-** शौचं नियमस्य प्रथमाङ्गम्, यस्यार्थः शुद्धता पवित्रता वा। बाह्याभ्यन्तरभेदेन तस्य द्वे अवान्तरभेदे। मृत्तिकया जलादिना च या शुद्धिः जायते सा बाह्यशोचाख्या। मनसा या शुद्धिः सा आभ्यन्तरशौचाख्या । पवित्रभोजनग्रहणेन गोमुत्रादिसेवनेन च बाह्यशौचं जायते। शरीरस्थ रागद्वैषादिचित्तमलानां दूरीकरणेन मानसिकमाभ्यन्तरं शौचं वा जायते। जलेन शरीराङ्गानां शुचिः जायते न तु आत्मनः मनसः वा।

**सन्तोषः-** सन्तोषः नियमस्य द्वितीयमङ्गम्, यस्यार्थस्तु विषयादिष्व-भिलाषानुसारादधिकवस्तुप्राप्तिः। यः यदिच्छति तस्मादधिकं प्राप्नोति चेत् सः सन्तोष इति। कामस्य विनाशे तृष्णाक्षयः जायते। अनेन सन्तोषः भवति साधकस्य। स्वकर्मानुसारं ईश्वरेच्छया वा यत्किञ्चिद् धनरत्नानि वस्तुप्राप्त्या प्रसीदनं सहर्षेण सुखदुःखानां सहनञ्च सन्तोषः। जीवनधारणाय येषां वस्तूनामत्यन्तमावश्यकता तेषामेव वस्तुनां प्राप्तिः सन्तोषः।

**तपः-** तपः नियमस्य तृतीयमङ्गम्। यस्यार्थः द्वन्द्वसहनम्। द्वन्द्व नाम क्षुधापिपासे, शीतोष्णे, स्थानासने, काष्ठमौनाकारमौने च। द्वन्द्वानामेतेषां सहनपूर्वकं व्रतचारणीयम्। यथा धातुवैषम्यं न जायते तथा तपः आचरणीयम्। युक्ताहारः तपः, न तु चान्द्रायणादीनि। उपवासादिना शरीरशोषणं तपसः लक्षणमिति केचित्। कायिकवाचिकमानसिकभेदेन सात्त्विकराजसिकतामसिकभेदेन च तपसः त्रैविध्यं प्रसिद्धम्।

**स्वाध्यायः-** स्वाध्यायः नियमस्य चतुर्थमङ्गम्। तस्यार्थस्तु स्वीयमध्ययनं नाम प्रणवादिपवित्रमन्त्राणां जपः मोक्षप्रतिपादकशास्त्राणां निरन्तराभ्यासश्च। पुरुषसूक्त-रुद्रमण्डल-ब्राह्मणादि-वैदिकग्रन्थानां ब्रह्मपारायणादिपौराणिकग्रन्थानामध्ययनञ्च स्वाध्याय इति। स्वाध्यात्पूर्णसिद्धिनां वर्णनं विष्णुपुराणेऽप्युपलभ्यते। यस्योल्लेखः व्यासभाष्येऽपि वर्त्तते।

सूत्रकारमते तु अभिप्रेतमन्त्रजपादीनां स्वाध्यायस्य प्रकर्षेण देवानामृषीणां सिद्धान्ताञ्च दर्शनानि भवन्तीति। अनेन साधकस्येष्टदेवतासाक्षात्कारोऽपि जायते इति।

**ईश्वरप्रणिधानम्-** ईश्वरप्रणिधानं नियमस्य पञ्चमाङ्गम्। ईश्वरप्रणिधानविषये समाधिपादे साधनपादे च वर्णनं समुपलभ्यते। अतः अस्य महत्त्वं सुतरामनुमेयम्। सर्वेषां कर्मणां कर्मफलानाञ्च ईश्वराय समर्पणमीश्वरप्रणिधानम्[188]। ईश्वरप्रणिधानेन साधकस्य मोहनिवर्तनपूर्वकं समाधिसिद्धिः सम्भवतीति सूत्रकारस्याशयः[189]।

**आसनम्-**

योगाङ्गप्रकारेण आसनस्य स्थानं तृतीयम्। यमनियमयोः पालनार्थं प्राणायामादिनामुत्तरयोगाङ्गानां सिद्ध्यर्थञ्च आसनसिद्धिः सुतरामावश्यकी। आस्यते आश्ते वा अनेनेति आसनम्। यस्यार्थः स्थानमिति । अनेन साधकस्य चेतसि स्थिरता सुखप्राप्तिश्च जायते। पद्मासनम्, विलासनम्, भद्रासनम्, स्वस्तिकासनम् इत्यादीनि तस्योदाहरणानि। आसनं नाम उपवेशनम्। सूत्रकारेण महर्षिपतञ्जलिना आसनानां संख्यानिर्देशो नैव विहितः। योगसूत्रस्य व्याख्याग्रन्थेष्वपि योगसिद्धान्तचन्द्रिकामतिरिच्य नान्यत्र आसनानां विशेषविवेचनमुपलभ्यते।

**प्राणायामः-**

योगाङ्गेषु प्राणायमस्य स्थानं चतुर्थम्। यथा यमनियमयोः सिद्ध्यानन्तरमासनसिद्धिः तथा आसन्य पुर्णतालाभानन्तरं प्राणायामसिद्धिः सम्भवतीत्यवगम्यते। प्राणस्य आयामः नाम व्यायामः प्राणायाम इत्युच्यते। प्राण-आङ्-यम्-घञ् इत्यनेन प्राणायाम शब्दः निष्पन्नम्। साधारणतः प्राणशब्दस्यार्थः एवं स्वीक्रियते यत्तु स्वासरूपेण शरीरे प्रविश्य

---

188 व्या.भा.- २.३२

189 यो.सू- २.४५

प्रश्वासरूपेणोच्छ्वासितं भवति। सूत्रकारमतेन आसनस्थैर्ये सति श्वासप्रश्वासयोः गत्यवरोधः पूर्वकं जीवनशक्तेः नियन्त्रणं प्राणायम[190] इति। प्राणायामस्योद्देश्यं जीवनशक्तेः नियन्त्रणम्। अतः चित्तस्य नियन्त्रणार्थं प्राणवायोः नियन्त्रणं कर्तव्यम्[191]।

**प्रत्याहारः-**

अष्टाङ्गयोगस्य पञ्चमाङ्गं प्रत्याहारः। इन्द्रियाणि विषयेभ्यः प्रत्याह्रियन्तेऽस्मिन् इति प्रत्याहारः। इन्द्रियाणां व्यापारः चित्तव्यापाराधीनः। प्राणायामानुष्ठानेन चित्तव्यापाराभावे इन्द्रियाणामपि स्वस्वशब्दादिविषयैः सह सम्बन्धः भवति प्रतिबद्धः। सः प्रत्याहारः[192] इत्युच्यते। प्रत्यहारस्य किं फलमिति चेत् तत्रोक्तं सूत्रकारेण- इन्द्रियाणां नियन्त्रणमेव प्रत्याहारस्य फलम् यतमानसंज्ञायामेकेन्द्रियजयेसत्यन्येषामिन्द्रियाणां जयनिमित्तं प्रयत्नान्तरापेक्षा वर्तते।

**धारणा-**

हृदयादिदेशविशेषेण सह चित्तस्य सम्बन्धः धारणायाः लक्षणं सूत्रकाराभिप्रेतम्। देशेविशेषेण सह सात्त्विकचित्तस्य बन्धः सात्त्विकचित्तस्य बन्धः सम्बन्धो वा धारणा इति वाचस्पतिमिश्रः मनः कस्मिश्चिदेकवस्तुनि स्थिरीकरणं ध्येयवस्तुविषयचिन्तनं वा धारणा इति। व्यासदेवमतेन नाभिचक्रहृदयपुण्डरीकादिदेशेषु बाह्यविषयेषु वा चित्तस्य सम्बन्धः धारणा इति।

**ध्यानम्-**

ध्यानं धारणासाध्यम्। नाभिचक्रादिदेशेषु चित्तस्य स्थिरीकरणानन्तरं तत्तत्तदेशेषु

[190] यो.सू- २.४९

[191] यो.सू- १.३४

[192] यो.सू- २.५४

ध्येयाकारचित्तवृत्तेः एकाग्रता ध्यानमित्युच्यते[193] ध्यानं धारणायाः नैरन्तर्य्यधारा। ध्येयावलम्बनदेशे विजातीयवृत्तिरहितचित्तस्य ध्येयविषयकसजातीयचित्तवृत्तेः निरन्तरसदृशप्रवाहः ध्यानमिति व्यासदेवः[194]। चित्तैकाग्रभूतध्येयपदार्थे ज्ञानस्य विलोमपरिणामपरित्यागपूर्वकमेकाग्ररूपेण ध्येयपदार्थस्याबलम्बनीभूतविषयधारायाः निरन्तरप्रवाहः ध्यानमिति भोजदेवः।

**समाधिः-**

समाधिः अष्टाङ्गयोगस्यान्तिमाङ्गम्। अयं तु ध्यानस्य चरमावस्था। निरन्तराभ्यासवशात् ध्येयस्वरूपमात्रप्रकाशकं ध्यानं यदा स्वाध्यानाकाररूपरहितिव भवति तदा समाधि इत्युच्यते। सम्यगाधीते एकाग्रीक्रियते विक्षपान् परिहृत्य मनो यत्र स समाधिः इति। समाधिः जीवात्मपरमात्मनो साम्यावस्था। ध्यानकाले चित्तं चित्तवृत्तिः तद्विषयश्चेते त्रयाणां समुदायरूपत्रिपुटेः क्रमशः ध्याताध्यानध्येयरूपेण भानम्।

**अष्टाङ्गयोगफलश्रुतिः-**

योगाङ्गानुष्ठानेन अनुपमं लभ्यते इति योगसूत्रे वर्णितम्। तथा हि योगसाधने शरीरस्य मनसः आत्मनः रूपान्तरं भवति। शरीरं योगाग्निमयं जायते। मनसि चित्तशुद्धिः चित्तप्रसादनञ्च लभ्यते।

अष्टाङ्गयोगेषु प्रत्याहारान्तं पञ्चयोगाङ्गानां स्वरूपं साधनपादे वर्णितम्, कथं न धारणादित्रयाणाम् इति चेत् तत्रोच्यते यमादिपञ्चयोगाङ्गापेक्षया धारणा-दित्रयाणामन्तिमयोगाङ्गानामन्तरङ्गत्वं सम्प्रज्ञातसमाधेश्च साक्षादुपकारकत्वम्, धारणाद्यपेक्षया

---

193 यो.सू- ३.२

194 व्या.भा- ३.२

प्रत्याहारान्तं यावत् योगाङ्गानां बहिरङ्गत्वम्। परन्त्वेतेन धारणादीनां सर्वथा नान्तरङ्गत्वम् असम्प्रज्ञातसमाधिदृष्ट्या तेषामपि बहिरङ्गत्वसिद्धेः।निर्वीजसमाध्यपरसंज्ञाविशिष्टस्यापरिणामविशिष्टस्यालम्बनरहितस्यासम्प्रज्ञातसमाधेः पार-म्पर्येणोपकारकत्वात्तेषामपि बहिरङ्गत्वसिद्धेः। अत एवोक्तं सूत्रकारेण तदपि बहिरङ्गं निर्बीजस्य इति।

**उपसंहारः-**

महर्षिपतञ्जलिः अष्टाङ्गरूपीराजयोगसाधनतत्परमुमान् स्वरूपप्रतिष्ठामचिरेण लभते इति तथा हि- पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति। तत्र व्यासभाष्ये समाम्नातम्- कृतयोगापवर्गाणां पुरुषार्थशून्यानां यः प्रतिप्रसवः कार्यकारकात्मनां गुणानां तत् कैवल्यम्। स्वरूपप्रतिष्ठा पुनर्बुद्धिसत्वाऽनभिसम्बन्धात् पुरुषस्य चितिशक्तिरेव केवला, तस्याः सदा तथैवावस्थानं कैवल्यमिति। अनन्तविषयाबद्धः जीवः स्वस्वरूपं विस्मृत्य अज्ञान तमसाच्छन्नः सन् स्वस्वरूपं विस्मरति। तदर्थं योगवेदान्तश्रवण-मनन-निदिध्यासन-संयमसाधनबलेन ब्रह्मात्मैक्यबोधमवाप्य निर्विक्त-समाहितशान्त-दान्त-सुसंयन्तबुद्ध्या यावत्जीवं अद्वैताखण्डैकरसं ब्रह्मसुखमश्नुते।

## सहायकग्रन्थाः


१. पातञ्जल-योगदर्शनं तत्त्ववैशारदीसम्बलितव्यासभाष्यसमेतम्, भारतीय विद्या प्रकाशन २२/३१ पञ्चगङ्गाघाट, वारणासी ।

२. भारतीय दर्शन, मोतिलाल वनारसीदास ४१ यु.स. वंगलो रोड, जवाहरनगर, दिल्ली- ११०००७ ।

३. ୧୦୮ ଉପନିଷଦ- ୨ୟ ଭାଗ ଯୋଗକୁଣ୍ଡଲ୍ୟୁପନିଷଦ୍- ପୃ- ୨୦୦-୨୦୧୫, Sri Vedamata Gayatri Trust Shantikunj, Haridwar।

४. हठयोगप्रदीपिका, चौखम्बा ओरियण्टालिया दिल्ली, ११०००७ ।

५. APAROKSHANUBHUTI Self- realization of Sri Sankaracharya, Swami Mumukshanana President, Advaita Ashram, Mayarati Pithoragarh, Himalayas from its Publication Department, Calcutta।

६. Light on Yoga (Preface), B.K.S Iyengar, Harper Collins Publishers 77-85 Funcham Palace Road London W68JB।

७. The Synthesis of Yoga, Sri Aurobinda Ashram Publication Department Pondicherry, 605002।

# कविवररमाकान्तशुक्लकाव्येषु राष्ट्रियभावना

**डॉ. राजकुमार मिश्रः**
(सहाचार्यः, साहित्यविभागः)
हरियाणासंस्कृतविद्यापीठम्,
बघौला, पलवलम्, हरियाणा

अर्वाचीनसंस्कृतकवितायां राष्ट्रियभावनाया विविधाः स्वरा दृष्टिपथमायान्ति। यद्यपि राष्ट्रभावनायाः स्वरो वैदिकसाहित्येऽपि समुपलभ्यते- **'माता भूमिः पुत्रोऽहं पृथिव्याः', 'वयं राष्ट्रे जागृयाम पुरोहिताः', 'मित्रस्य चक्षुषा समीक्षामहे'** इति रूपेण। एवमयमेव राष्ट्रियभावनायाः स्वरः पुराणेष्वपि उपलभ्यते यथा-

**गायन्ति देवाः किल गीतकानि धन्यास्तु ते भारतभूमिभागे।**
**स्वर्गापवर्गास्पदमार्गभूते भवन्ति भूयः पुरुषाः सुरत्वात्[१] ॥**

एवमेव स्मृतिवाङ्मयेऽपि यथा-

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः[२] ॥**

एवमेव लौकिकसाहित्येऽपि प्रायेण प्रतिकविकाव्यं प्रकरणविच्छित्त्या राष्ट्रियभावनायाः स्वरः चित्रितो वर्तत एव। प्राक्तने साहित्ये उदात्तराष्ट्रकृते कीदृशी भावना अपेक्षिता भवतीति प्रतिपादितं वर्तते। प्राचीनसाहित्योपदिष्टा राष्ट्रविषयिणी भावना यदा स्वाधीनताकाले दुश्शासकैः खलीकृता तदा तदानीन्तनैः कविभिः तामेव सर्वोद्धारक्षमां भावनामानेतुं विविधस्वरेण काव्यानि प्रणीतानि, यत्र क्वचिद् राष्ट्रवन्दनम्, आङ्ग्लशासनं प्रति विरोधः, ऐतिह्यस्मरणं, शाश्वतमूल्यस्थापनप्रेरणा चेति विषयाः प्रामुख्येन वर्णिताः। पद्मश्रीविरुदविभूषिते कवित्वशुक्ले रमाकान्तशुक्ले राष्ट्रिया भावना कुतो जागरिता इत्यस्या जिज्ञासायाः कृते उत्तररूपेण तदीयपरिवेश एव आयाति। रमाकान्तशुक्लवर्यस्य जन्म स्वतन्त्रताप्राप्तेः पूर्वम् अर्थात् १९४० तमे ख्रिष्टाब्देऽभवत्। तस्मिन् काले तत्प्राग्वर्तिनां कवीनां कवितायाः स्वरः प्रायो

राष्ट्रविषयक एव भवति स्म। यदा कविवरो रमाकान्तशुक्लो रचनारम्भम् ऐच्छत् तदा स कविताया वर्ण्यविषयत्वेन राष्ट्रस्वरमेव कविमुखात् श्रुतवान् दृष्टवान् च इत्थं तदीयमनसि राष्ट्रियभावनायाः कश्चन संस्कारविशेषो भावः प्रस्फुटितः। मनसि यो हि भावो भूयोभूय आगच्छति तस्यैव प्रभावो बलीयान् हृदयकृतस्थानश्च भवति इति सहृदयहृदयप्रमाणसिद्धं वचोऽनुभवो वा। मन्ये इदमेव कारणं कवेः रमाकान्तशुक्लस्य राष्ट्रियभावनायाः राष्ट्रचेतनायाः कवितायाः निर्माणस्य वर्तते। यद्यपि रमाकान्तशुक्लस्य काव्ये बहुविधा वर्णा बहुविधा रसाश्च वर्तन्ते तथापि स वीररसस्य राष्ट्रचेतनायाः च कविताकरणेन परां प्रसिद्धिं प्राप्नोदिति नास्ति अविदितं विदुषाम्। यथा भवभूतिर्विविधान् रसान् वर्णयित्वाऽपि **'कारुण्यं भवभूतिरेव तनुते'** इति रूपेण प्रसिद्धिं यातः तथा रमाकान्तशुक्लो वीररसेन राष्ट्रभक्तिस्वरात्मकेन काव्येन। कविवरस्य रमाकान्तशुक्लस्य वीररससम्बद्धं राष्ट्रस्वरं च वीक्ष्य कविवरोऽभिराजराजेन्द्रमिश्रः तं वाग्वधूट्याः अर्थात् सरस्वत्याः रोषत्वेन उत्प्रेक्षते यथा-

**प्रागल्भ्यं काश्यपोऽस्याः प्रणतिपरिमितो बच्चुलालोऽपि मानः**
**कारुण्यं श्रीनिवासः स्मितचटुलकला भास्करो वल्लभोऽङ्कः।**
**रोषः कान्तो रमाया निभृतरसकथा दीक्षितव्यूढपुष्पा**
**लावण्यञ्चाभिराजो जयति नवनवा संस्कृता वाग्वधूटी[३]॥**

अत्राभिराजेन भगवत्याः सरस्वत्याः अर्थाद् वाग्वधूट्या रोषो रमाकान्तशुक्लः स्वकवितावैशिष्ट्येन वर्तत इति उत्प्रेक्षितम्। रमाकान्तशुक्लस्य देशोपद्रवान् राष्ट्रविघातकान् वा प्रति रोष एव तं राष्ट्रोपरि लेखितुं प्रेरयति, इत्थं राष्ट्रपरककवितारचनया कविवरो रमाकान्तशुक्लो रामधारीसिंहदिनकर इव प्रतिभाति। मन्मते तु स संस्कृतराष्ट्रकविः। अमुमेव भावमहं क्वचित् स्वकवितायामित्थं प्रकटयामि-

**यो राष्ट्रकविरिह संस्कृते दिनकर इवाभूत् स्वैर्गुणैः।**
**लोकात् प्रवचसामनुचरस्स गतो रमाकान्तः कविः[४]॥**

कविवरो रमाकान्तशुक्लो 'भारतजनताहम्' इति शीर्षकसंवलिते काव्ये भारतीयजनतायाः स्वरूपं प्रतिपादयति तत्र पद्यस्य प्रारम्भे अर्थात् पूर्वार्द्धे जनतायाः स्वरूपं मृदुरूपेण प्रतिपादयति पश्चात् कठिनतया मृदुतया चोभयरूपेण-

**अभिमानधना विनयोपेता शालीना भारतजनताहम्।**

**कुलिशादपि कठिना कुसुमादपि सुकुमारा भारतजनताहम्[५]॥**

कविवरः शुक्लवर्य्यः क्वचिद् वैदिकराष्ट्रभावनां **'यत्र विश्वं भवत्येकनीडम्'** किञ्च **'मित्रस्य चक्षुषा समीक्षामहे'** अनुसृत्य अनुवाद्य वा तदर्थविस्तारमपि विदधाति-

**निवसामि समस्ते संसारे मन्ये च कुटुम्बं वसुन्धराम्।**

**प्रेयः श्रेयश्च चिनोम्युभयं सुविवेका भारतजनताहम्[६]॥**

अत्र 'यत्र विश्वं भवत्येकनीडम्' इत्यनुसारं कविः समग्रं विश्वं परिवारत्वेन उत्प्रेक्ष्य भारतीयजनानां विदेशान् वैदेशिकान् जनान् वा प्रति पारस्परिकं प्रेयोवितरणे श्रेयोवितरणे महिमानं वितनुते। शुक्लवर्य्यः प्राक्तनीं भारतीयां पद्धतिं परम्परां वा प्रति महतीमास्थां निदधाति, किञ्च भारतीयसभ्यतायाः 'अतिथिदेवो भव' इतिरूपायाः कारणेनैव देशस्य देशान्तराद् वैशिष्ट्यमपि सम्यग् जानाति। अत एव कविः वेदमूलायाः भावनायाः प्रस्तुतिमाधुनिके काले विधाय तन्माध्यमेन भारतीयजनान् विशेषतो नवयुवकान् प्रति प्रबोधनमपि विधत्ते-

**उत्सवप्रियाहं श्रमप्रिया पदयात्रा-देशाटन-प्रिया।**

**लोकक्रीडासक्ता वर्धेऽतिथिदेवा भारतजनताऽहम्[७]॥**

अस्माकं परम्परा सुखेषु दुःखेषु च समस्थितितया स्थातुं वर्तते। किन्तु प्रायेण इदानीन्तनाः जनाः सुखेषु अत्युत्साहवन्तो दुःखेषु च अतिदुःखिता अतिक्लेशिता वा भवन्ति, एतान् जनान् कविः स्वौजसा वाण्या स्वराष्ट्रगौरवं प्राचीनव्यवहारपद्धतिं च संस्मार्य तेषु उत्साहभावं भरति-

**कल्पनातीतदुःखानां वा सौख्यानां वापि पराः काष्ठाः।**

**समभावतया सोढुं शक्ताः समबुद्धिर्भारतजनताहम्[८]॥**

**दम्भोलिसन्निभा अपि विपदोऽनायासमेव सर्वा हि सहे।**

**विषपानपरापि स्मितवदना सर्वंसहभारतजनताहम्**[९] ॥

कविः प्राचीनजीवनशैल्यामतीव श्रद्धावान् वर्तते वस्तुतः प्राचीनजीवनपद्धत्यैव अस्माकं विश्वगुरुत्वं श्रेष्ठपदत्वं वा विश्वे अभिराजति, अतः कविः स्वराष्ट्रवैशिष्ट्यं साभिमानं स्फोरयते-

**आयातु यातु लक्ष्मीः स्तुवन्तु निन्दन्तु नीतिनिपुणाः कामम्।**
**उच्चावचमार्गे गच्छन्ती सोत्साहा भारतजनताहम्**[१०] ॥

एवमेव कविर्जनान् एकसूत्रे स्थापयितुं प्रेरयति। भारतीयो जनो भेदभावं विनैव सर्वेषु विश्वासतया मैत्रीं स्थापयति, इदं हि मैत्रीकरणं भारतस्य सहजा प्रकृतिः न च दुर्बलता, कविरत्र हि मित्रस्य चक्षुषापि संसारं द्रष्टुं कामयते-

**मैत्री मे सहजा प्रकृतिरस्ति नो दुर्बलतायाः पर्यायः।**
**मित्रस्य चक्षुषा संसारं पश्यन्ती भारतजनताहम्**[११] ॥

भारतराष्ट्रं मैत्रीस्थापने कामं स्वभावतः अग्रे वर्तते किन्तु एतस्मात् मैत्रीस्थापनकारणात् तत् दुर्बलं नास्ति प्रत्युत बलवत् वर्तते। ऋजुतया मैत्रीस्थापनेन च वैदिशिकाः स्वराष्ट्रं दुर्बलं न मन्येरन् एतदर्थं कविः तान् साटोपं सगर्वं स्वकीयां राष्ट्रियां भावनां परिचाययति-

**आक्रमणं नैव करोमि कदाप्याक्रमणं नैव कदापि सहे।**
**आर्जवं न मे मूर्खत्वमस्ति दृढकवचा भारतजनताहम्**[१२] ॥

कविः देशो वा स्याद् विदेशो वा स्यात् सर्वत्र वाणीस्वातन्त्र्यं कामयते सः कस्यचिदपि पुंसः किञ्च स्वदेशस्य जिह्वायाम् अर्गलां न कामयते, एतदर्थं स विश्वमञ्चे राष्ट्रभावनामित्थं प्रकटयति-

**जिह्वां मे कीलयितुं शक्तः कः कोऽत्र जगति मातुर्जातः।**
**वाणी विहरति मे सदोज्ज्वला गर्जन्ती भारतजनताहम्**[१३] ॥

कविः विश्वं प्रबोधयति यद् भारतं स्वमुग्धतया मूर्खं नास्ति प्रत्युत तत् **'शठे शाठ्यं समाचरेत्'** इति पाठमपि सम्यक् जानाति, भारतराष्ट्रं तदीयमुग्धतया कोऽपि देशः प्रवञ्चयितुं न शक्नोति। अमुमेव भावं हिन्दीभाषायाः प्रसिद्धायाः **'घड़ियाली आँसू बहाना'** इति लोकोक्तेः प्रयोगेण कविः इत्थं प्रस्तौति-

**नक्राश्रुजलं जाने सम्यक् जाने च गृध्रगोमायुगिरम्।**
**जाने करटक-दमनक-चरितं हृदयज्ञा भारतजनताहम्[१४]॥**
**मुग्धा त्वहमस्मि परं दृप्तान् लेहयामि धूलिं निजौजसा।**
**जनतन्त्रपद्धतेर्गुडाकेश-गोप्त्री खलु भारतजनताहम्[१५]॥**

कविः भारतस्य अभिज्ञानं वैदिकमूल्यजीवनमेव तथा च प्राक्तनीं व्यवहारपद्धतिमेव मन्यते, किन्तु अधुना राष्ट्रे अनेके तस्कराः, हिंसकाः, गेहभेदिनः, बलात्कारिणः, असभ्यताव्यवहारिणः च सन्ति, तेषाम् अवाञ्छिततत्त्वानां कारणेन राष्ट्रस्य ध्वजो यदा कदा लज्जितो जायते, अतः कविः स्वराष्ट्रस्य अभिज्ञानाय सर्वविधं सदाचरणमेव मूलत्वेन मन्यमानो विश्वं प्रबोधयति-

**तस्करा हिंसका गेहभिदो मूढाश्च सन्तु मयि यदा कदा।**
**ते किन्तु नैव परिभाषा मे समुदारा भारतजनताहम्[१६]॥**

कविवरो रमाकान्तशुक्लो वस्तुतो राष्ट्रकविः, तस्य धमनिषु राष्ट्रासक्तो रक्तः प्रवहति, कविमनसि राष्ट्रं साक्षाद् देव एव। स स्वोद्गारेण स्वाचरणेन च राष्ट्रियान् जनानित्थमुपदिशति-

**भारतं वर्तते मे परं सम्बलं भारतं नित्यमेव स्मरामि प्रियम्।**
**भारतेनास्ति मे जीवनं जीवनं भारतायार्पितं मेऽखिलं चेष्टितम्॥**
**भारताद् भाति मे भूतलं भूतलं भारतस्य प्रतिष्ठास्ति मे मानसे।**
**भारतेऽहं प्रपश्यामि विश्वेश्वरं भारत! क्षोणिशृङ्गार तुभ्यं नमः[१७]॥**

अद्यत्वे जातिधर्माधारेण जनः परस्परं विभक्तो वर्तते, किन्तु नेदं कवेरभीष्टम्। कविः शुक्लवर्यो भारतराष्ट्रस्य सौन्दर्यं सर्वधर्मसमुदायेन मनुते स सर्वधर्मसमुदायस्य प्रबलः समर्थकः पक्षधरो वा प्रतीयते यथा-

**शंप्रदं शंकरं माधवं राघवं पार्वतीं राधिकां जानकीं च स्तुवत्।**
**विठ्ठलं बुद्धदेवं जिनं च स्मरद् भूतले भाति मेऽनातरं भारतम्[१८]॥**

कविवरस्य रमाकान्तशुक्लस्य दृशा राष्ट्रयशोवर्धने यः कोऽपि स्यात् स सर्वथा समादरणीय एव। कविः शुक्लवर्यः रामचरितमानसं कबीर-बीजकं सूरसागरं समानरूपेण एककोटिकमेव परिगणयति यशोवर्धनत्वात्-

**योगवासिष्ठगीतामहाभारतैर्ग्रन्थरत्नैश्च तैस्तैः प्रबुद्धं तथा।**
**मानसं बीजकं सूरसिन्धुं दधद् भूतले भाति मेऽनारतं भारतम्**[१९]॥

कविः राष्ट्रस्य न्यासं प्रति बद्धादरो भूत्वा लोकानपि बद्धादरान् कर्तुं प्रेरयति। वस्तुतः पूर्वजान् प्रति समादरभावः अस्माकं परिपाटी, तेषां भावनायाः रक्षणं प्रचारणं च अस्माकं राष्ट्रिया भावना किञ्च कर्तव्यमपि, कविः अमुमेव सन्देशं बोधयति लोकान्-

**विक्रमादित्यवेतालगाथाङ्किते मालवे रेजतुर्यस्य लोकश्रुते।**
**भर्तृपूर्वो हरिश्चाथ सान्दीपनिर्भूतले भाति तन्मामकं भारतम्**[२०]॥

कविः देशस्य रक्षाकृते स्वतन्त्रताकृते वा सर्वानेव हुतप्राणान् स्मरति। तस्य मनसि हिन्दुर्वा मुस्लिमो वेति भेदभावो नास्ति। यः कोऽपि स्यात् देशहितकृते रतो मृतो वा स सर्वतः प्रणम्य एव। स देशकृते अमरत्वं गतम् अब्दुलहमीदमित्थं स्मरति कवितामाध्यमेन च लोकान् स्मारयति-

**घर्घरस्वानपूर्वं पुरः प्रस्थितान् शत्रुटैङ्कान् करीन्द्रानिव ध्वंसयन्।**
**श्रीहमीदो बभौ केसरी यत्र तद् भूतले भाति मेऽनातरं भारतम्**[२१]॥

भारतस्य भव्यमुदात्तं च स्वरूपं तदीयशाश्वतमूल्यनैव चकास्ति, इदमेव वस्तुत आध्यात्मिकं रहस्यम्। कविः पापपुण्ययोः फलमपि लोकान् निर्दिशति, जनः पुण्येन वर्धते पापेन च स्वयमेव हिंस्यते, सत्येन सर्वत्र जयः, असत्येन च पराजयः, इत्येव अस्माकं भावना, यथा-

**यत्र हिस्रः स्वपापैः स्वयं हिंस्यते यत्र साधुः समत्वाद्भयान्मुच्यते।**
**यत्र सत्यं जयं याति नैवानृतं भूतले भाति तन्मामकं भारतम्**[२२]॥
**यत्र नास्त्यङ्कुशो वाचि कस्यापि वै यत्र नास्त्यङ्कुशो मानसे कस्यचित्।**
**यत्र नास्त्यङ्कुशः कर्मणि क्वापि वै भूतले भाति तन्मामकं भारतम्**[२३]॥

कविः रमाकान्तशुक्लः **'अहं स्वतन्त्रता भणामि'** इति कविताशीर्षकमाध्यमेन स्वतन्त्रता किं किं वाञ्छति? तस्याः भावना का? इत्यस्यापि चित्रणं करोति-

**मदर्चनाकृते शिरांस्युपायनीकृतानि यैः**
**धनं वपुस्तथा मनः सहर्षमर्पितानि यैः।**
**अवापुरात्मवक्षसि ज्वलद्भुशुण्डिगोलिकाः**
**गतास्त एव मे जनाः सदैव वन्दनीयताम्**[२४]**॥**

प्रस्तुतपद्यमाध्यमेन स्वतन्त्रता कथयति यत् यैः मत्सेवाकृते सङ्ग्रामे शिरांसि उपायनीकृतानि, यैः मदर्थं धनं वपुः मनः च समर्पितं, यैः स्ववक्षसि ज्वलद्भुशुण्डिगोलिकाः सम्मुखीकृताः ते एव मम कृते वन्दनीयतां गता वर्तन्ते नान्यथा। उक्तकविताच्छलेन कविः कवित्वशुक्लो रमाकान्तशुक्लो मन्ये लोकान् प्रति राष्ट्रियां भावनामेव प्रस्फोरयते।
कस्यचिदपि देशस्य कृते तदीयराष्ट्रियभावना कीदृशी भवेदिति भावं स्वतन्त्रता स्वयमेव उत्थापयति, यथा-

**मया न कल्पितं कदापि दुर्बलाभिशोषणं**
**मया न कल्पितं कदापि दुर्जनाभिपोषणम्।**
**मया न कल्पितं कदापि सज्जनावमाननं**
**सहेऽखिलं च तद् यथा सहै न तद् विधीयताम्**[२५]**॥**

इत्थं द्रष्टुं शक्यते यत् पद्मश्रियो रमाकान्तशुक्लस्य काव्ये सर्वत्र उदात्ताया लोककल्याणपराया राष्ट्रियभावनाया विविधवर्णा स्थितिर्वर्तते।

## पादटिप्पणयः-

१ श्रीविष्णुपुराणम्, २,३,२४
२ मनुस्मृतिः, द्वि.अ.श्लो.सं. २०
३ श्रुतिपरम्परया श्रुतं पद्यम् (अभिराजराजेन्द्रमिश्रप्रणीत'श्रुतिम्भरा'काव्यगतं पद्यम्)
४ लेखकेन विरचितम्
५ भारतजनताहम्, पृ.सं. ३३

६ भारतजनताहम्, पृ.सं. ३३
७ भारतजनताहम्, पृ.सं. ३४
८ भारतजनताहम्, पृ.सं. ३४
९ भारतजनताहम्, पृ.सं. ३५
१० भारतजनताहम्, पृ.सं. ३६
११ भारतजनताहम्, पृ.सं. ३६
१२ भारतजनताहम्, पृ.सं. ३६
१३ भारतजनताहम्, पृ.सं. ३७
१४ भारतजनताहम्, पृ.सं. ३८
१५ भारतजनताहम्, पृ.सं. ३८
१६ भारतजनताहम्, पृ.सं. ३८
१७ भाति मे भारतम्, प्रास्ताविकपद्यद्वयी
१८ भाति मे भारतम्, पृ.सं. २१
१९ भाति मे भारतम्, पृ.सं. २६
२० भाति मे भारतम्, पृ.सं. ५६
२१ भाति मे भारतम्, पृ.सं. ७३
२२ भाति मे भारतम्, पृ.सं. ७५
२३ भाति मे भारतम्, पृ.सं. ८७
२४ भारतजनताहम्, पृ.सं. २२
२५ भारतजनताहम्, पृ.सं. २३

## सन्दर्भग्रन्थाः-


१ श्रीविष्णुपुराणम्, गीताप्रेस, गोरखपुरम्, षड्पञ्चाशत्तमं संस्करणम्/पुनर्मुद्रणम्, सं. २०७६

२ मनुस्मृतिः, चौखम्बा कृष्णदास अकादमी, वाराणसी, प्रथमं संस्करणम् २००७ ई.।

३ भारतजनताऽहम्, देववाणीपरिषद्, दिल्ली, प्रथमसंस्करणं २००१ ई. पुनर्मुद्रणम् २००२ ई.।

४ भाति मे भारतम्, देववाणीपरिषद्, दिल्ली, पञ्चमं संस्करणम् २००० ई.।